# अजातशत्रुः

लेखकः —
डा० श्रीनाथ हसूरकरः

प्रधान सम्पादकः
डॉ० मण्डन मिश्रः प्राचार्यः

सम्पादकः
डॉ० ब्रह्ममित्र अवस्थी, आचार्यः




प्रकाशनस्थलम्
श्रीलालबहादुरशास्त्री-केन्द्रीय-संस्कृतविद्यापीठम्
शहीदजीतसिंहमार्गः, नईदिल्ली-११००१६

CC-0 Pulwama Collection. Digitzed by eGangotri

प्रकाशक:

**डा० मण्डनमिश्रः, प्राचार्यः**
श्रीलालबहादुरशास्त्रीकेन्द्रीयसंस्कृतविद्यापीठम्
शहीदजीतसिंहमार्गः, नई दिल्ली-११००१६
दूरभाषाङ्काः ६५०८३१

प्रकाशनाब्दः सं० २०४१ वि०

प्रथमं संस्करणम्

मूल्यम् रूप्यकाणि

श्रीलालबहादुरशास्त्रीकेन्द्रीयसंस्कृतविद्यापीठस्थ—
'अनुसन्धान-प्रकाशन-विभागस्य' तत्त्वावधाने प्रकाशिता।

मुद्रकः —अमर प्रिंटिंग प्रेस, ८/२५, विजय नगर, दिल्ली-११०००९

CC-0 Pulwama Collection. Digitzed by eGangotri

# प्रधान सम्पादकीयम्

'श्रीलालबहादुरशास्त्री-केन्द्रीय-संस्कृत-विद्यापीठीयशोधसंकायस्य शोधपत्रिकायां यदाकदाऽभिनवापि काव्यसृष्टिः प्रकाशमानेया' इति निर्णयानुसारेण डा० श्रीनाथ हसूरकर महोदयस्य 'उपन्यासा'भिधे गद्यकाव्यवर्गे परिगणनीयेयम् 'अजातशत्रु' अभिख्या कृतिः शोधप्रभायाः षष्ठविश्वसंस्कृतसम्मेलनविशेषाङ्के ( १९८४ ई० वर्षे ) समावेशिता प्रकाशिता च तत्रैव । तत एव पृथक्कृत्येयं कृतिः भवतां सहृदयानां करकमलयोः समुपस्थापयता हर्षभरेण मोमुद्यमानं मे चेतः ।

उपन्यासाभिधोऽयं गद्यकाव्यप्रकारः काव्यशास्त्रे नूतनः प्रकारः । संस्कृतविद्वांसोऽनादिकालादेव रूढिमनादृत्य गुणग्रहिणो बभुवुः । इमां महनीयाम्परम्परामनुसरन्नेव डा० श्रीनाथ हसूरकरः गद्यकाव्यस्यास्मिन् भेदे तिस्रः कृतीः प्रास्तौत् । तासु द्वितीयेयं विद्यापीठीयशोधसंकायात् प्रकाश्यमाना न केवलं सहृदयानां मनांसि रञ्जयिष्यति, पर कविवरान् नवनवाः कृतीरुपस्थापयितुं काव्यशास्त्रीयानाचार्यान् समीक्षकांश्च गद्यकाव्यभेदेषु कथाख्यायिकाभ्यां भिन्नमिमं प्रकारं काव्यप्रकारेषु समावेशयितुं प्रेरयिष्यति । सहृदयैरास्वादनीये सरसेऽस्मिन् काव्ये मुद्रणादिविषयाः त्रुटयः विद्वद्भिः मृष्याः, 'परिपवनवदथवा ते न शिक्षितास्तुषग्रहणम् ।'

विदुषां विधेयः
**डा. मण्डन मिश्रः**
प्राचार्यः

कार्त्तिक पूर्णिमा
सं. २०४१ वि.

CC-0 Pulwama Collection. Digitzed by eGangotri

# प्रस्तावना

डा. श्री नाथ हसूरकरपंडितस्य अभिनवामिमाम् 'अजातशत्रु' अभिख्यां कृतिं विदुषां सहृदयानां करकमलयोः समर्पयतो हर्षभरतुन्दिलं मे चेतः। डा. हसूरकरः सुविदितस्य संस्कृतविदुषः सर्वतन्त्रस्वतन्त्रस्य श्री श्रीपादशास्त्री हसूरकरस्य तनूजः, पितेव बहुविधसाहित्यवित् कविः। काव्यतीर्थ-साहित्याचार्य एम. ए., पी-एच. डी. प्रभृतिभिरुपाधिभिः सुभूषितो डा. श्रीनाथ हसूरकरो मध्यप्रदेशशासने प्रायशस्त्रिंशद् वर्षाणि (१९५२-८२) यावत् सेवानिरतः प्राध्यापकप्राचार्यप्रभृतिषु पदेषु प्रतिष्ठितः सन् संस्कृतभाषायाः प्रचाराय प्रसाराय च समर्पितोऽभूत्। द्वादशाधिकैः शोधनिबन्धैः समीक्षकेषु लब्धकीर्त्तिःश्री हसूरकरमहाभागः 'पुष्पाञ्जलिः' नामकेन कवितासंग्रहेण प्रतिज्ञापूर्तिः, अजातशत्रुः सिन्धुकन्या प्रभृतिभिरुपन्यासैः स्वीयां कारयित्रीं प्रतिभामप्राकाशयत्।

संस्कृतकाव्यशास्त्रस्यैतिह्यपरम्परायां गद्यकाव्यस्य द्वौ भेदौ श्रूयेते कथा-आख्यायिका-चेति। तत्र कथायां कथावस्तु कविप्रतिभोत्थं भवति, आख्यायिकायां च सा ऐतिह्यमाश्रित्य प्रवर्तते। उभयोरपि वपुषोविस्तारप्रसंगे आचार्या मौनमेवावलम्बन्त। यद्यपि पाश्चात्यं काव्यशास्त्रमनुकुर्वन्तोऽद्यतनीना आचार्याः कथासाहित्यं द्विधा व्यभजन्त कथा (कहानी) उपन्यासश्च। अनयोर्विभागस्सामान्यतया कथावस्तुनः स्वरूपं विस्तारं चावलोक्य स्वीक्रियते। ग्रन्थकृन्मते इयं कृतिर् 'अजातशत्रुः' उपन्यासवर्गं उपन्यस्तास्ति। आधुनिके भारतीयकाव्यशास्त्रे उपन्यासवर्गः कथाया उपभेदः इति पूर्वमुक्तम्। परमयम् 'अजातशत्रु' उपन्यासः कथावर्गे परिगणितुं न शक्यते, संस्कृतकाव्यशास्त्रे कथाया वस्तुनः कल्पितत्वस्वीकारात्। अत्र च वस्तु ऐतिहासिकम्। ऐतिहासिकं वस्तु आख्यायिकायां वितन्यते, परमस्यां कृतावाख्यायिकायाः अपि लक्षणानि न संगच्छन्ते, आख्यायिकायां कवेरात्मवृत्तवर्णनस्याप्यावश्यकत्वात्. न चात्र कवेरात्मवृत्तं कुत्रापि निबद्धम्। तस्माद् इयं कृतिः संस्कृतकाव्यशास्त्रे गद्यकाव्यस्य कस्मिन्नपि पूर्वस्वीकृते विभागे निधातुं नैव शक्यते। तथा सति अस्या रचनायाः अकाव्यत्वं स्यादित्यपि न, रसमयत्वाद्, अन्यैरपि अलंकार-रीति-वक्रोक्ति-ध्वनि-प्रभृतिभिधर्मैरलंकृतत्वाच्च। कुत्र तर्हि अस्याः कृतेरन्तर्भाव इति चेत् न कुत्रापि कृतेरस्या सर्वेभ्योऽपि विशिष्टत्वात्, विशिष्टत्वं च न दोषः परं गुण एव।

संस्कृतगद्यकाव्ये एवंविधा सर्वप्रथमा कृतिः 'शिवराजविजयम्' पं. अम्बिकादत्त-व्यासेन लिखिता समादृता च सहृदयैः। तदनन्तरं [illegible] रचनाः दृष्टिपथं

CC-0 Pulwama Collection. Digitzed by eGangotri

याताः । मन्ये अमुना महाकविना कृतान् 'प्रतिज्ञापूर्त्तिः', 'अजातशत्रुः', 'सिन्धुकन्या' प्रभृतीन् ऐतिहासिकान् उपन्यासान् समीक्ष्य समीक्षकाः संस्कृतविद्वांसः काव्यशास्त्रदिशा अस्याः कृतेः एतादृशीनां गद्यकाव्यकृतीनां लक्ष्यतामभिलक्ष्य लक्षणानि विधास्यन्ति ।

अस्याः कृतेः सम्पादनप्रसंगे शोधविभागे व्याख्यात्रीणां डा० अमिता शर्मणां योगो विशिष्य स्मरणीयः, यासां विशिष्टेन अवधानेनैव कृतिरियं यथासमयं प्रकाशमगच्छत् । अमर-प्रिंटिंग प्रेसाभिधस्य मुद्रणालयस्याधिकारिणोऽपि धन्यवादार्हाः येषां श्रमणेयं स्वीयं भौतिकं स्वरूपमासादयत् । मन्ये हसूरकरमहोदयस्य लेखनी एतादृग्भिः सरसाभी रचनाभिः संस्कृत-वाङ्मयं सुतरां पृथूकरिष्यति ।

कार्त्तिकपूर्णिमा
सं. २०४१ वि.

विदुषमाश्रवः
**ब्रह्ममित्र अवस्थी**
आचार्यः

CC-0 Pulwama Collection. Digitzed by eGangotri

## अनुक्रमः



CC-0 Pulwama Collection. Digitzed by eGangotri

## प्रथमः परिच्छेदः

'किमेतदि'ति जिज्ञासयेव धवलविरलाभ्रपटलावगुण्ठनं, दूरीकृत्य शशाङ्ककला पश्चिमाशावलम्बिनी क्षणमेकमचकात्। आसन्नप्रायमत्याचारिप्रहारमपेक्षमाणाया वनलक्ष्म्या दीर्घः निश्वास इव नैशः समीरो हिमशीतलो वातुमारभत। समीपोपस्थितं रोमहर्षकं दृश्यं द्रष्टुमुत्सुकोत्सुका इव रात्रिचरा हिंस्राः श्वापदा मूकभावमात्यन्तिकमुररीचक्रुः। रोदितुं तु करुणकरुणमारभत एका सारमेयी कस्मिंश्चित् जीर्णशीर्णे तरुमूले निलीना।

ग्रामटिका तु सा, समवधीर्य तद्दुश्चिह्नं, शिशिरकरकरसंस्पर्शलिसालसेव निशीथसमीरवीजितेव सान्द्रवृक्षराजिसंछादिता सुखमस्वपदकल्पयन्ती भाविनीं घटनां स्वप्नेऽपि।

अत्याचारस्य स्वभाव एवैतादृशः।

आविर्बभूव ह्यकस्मात् राजगृहमार्गेण शनैः शनैस्तामेव निराशङ्कामुद्दिश्य निःशब्दमुपसर्पन्, क्षीणतया चन्द्रिकाया दुर्लक्ष्यविशेषः, कृष्णकवचाऽऽवृतशरीराणां कृष्णाश्वारोहाणां समुल्लसदसिलतानां यूनामेकः समूहो, विडम्बयन् भीषणरमणीयां शोभां प्रलयंकरजलदखण्डस्य, विद्युल्लतोद्भास्यमानस्यानुकुर्वन् लोमसंहर्षणीं रुचिं कृतान्तदूतसमुदायस्य निर्घृणकार्यप्रवृत्तस्य कुत्सितं निशब्दं हसतः।

निभृतं कृतप्रवेशश्च तस्यां विश्रब्धसुप्तायामजागरयित्वैव धूलिप्रसुप्तान् ग्रामसिंहानदत्त्वैव नैशरक्षाधिकृतेभ्यस्तन्द्रालसेभ्यः राजपुरुषेभ्यः स्वल्पमप्यवसरं प्रतीकारस्याखण्डयित्वैव निःशङ्कशायिनां ग्रामीणानां सुखनिद्रामुपससर्प ग्रामटिकामध्यस्थितं नात्युत्तुंगमृत्प्राकारभित्तिपरिवेष्टितं ग्रामणीनिवासम्।

आरभत च तन्मुख्यद्वारं पिहितकपाटं परशुभिर्बलाद् भेत्तुम्। तत् प्रहारध्वनिना हठाद्विदीर्णा बभूव तस्या ग्रामटिकायाः सर्वतोव्यापिनी शान्तिः। विश्रब्धनिद्रितानां ग्रामीणानां सुखनिद्रा च।...'कुतः खल्वयं, कुतः खल्वयम्' इति भयविस्मयव्याकुला विलुप्तनिद्रा आरक्तनयना अकृतवेषपरिवर्ता सर्वे ग्रामीणा, उच्चावचा, बालास्तथा वृद्धा, दुर्बलास्तथा सबला, निर्धनास्तथा सधनाः,

CC-0 Pulwama Collection. Digitzed by eGangotri

परित्यज्य शय्यां विहाय स्वाऽऽवासं द्वारविदारणध्वनिं तमनुसरन्तो, निमेषमात्रानन्तरं, स्वप्रमुखनिवासमभिलक्ष्याधावन् । समुपसृत्य च तं, दूरादवलोक्य विनष्टप्रायतया चन्द्रप्रकाशस्येषल्लक्ष्यविशेषान् शस्त्रभीषणानश्वारोहिणस्तद्द्वारमवरुध्यावस्थितान् कांश्चित्तद् विदारणव्यस्तान् भयजडा विस्मयमूढाः परिलुप्तचेतना इव तस्थुः किञ्चिदपि कर्तुमक्षमाः ।

पश्यतामेव च तेषां—तीव्रप्रहारविदीर्यमाणकपाटद्वयं तन्महाद्वारं, हृदयमिव घोरप्रकृतेः पुरुषस्य विपत्प्रहारैस्तीव्रैः, कतिपयक्षणानन्तरमेवोद्ध्वस्तं बभूव ।

अविशंश्च तदभ्यन्तरं साक्षात् कृतान्तदूता इव तेऽश्वारोहा, अवारुन्धन् सर्वप्रथमं निवासाभ्यन्तरे वर्तमानं शस्त्रागारं, निःशस्त्रानकुर्वन् भयजडान् रक्षाधिकृतान् सेवकान्, प्रारभन्त च कान्दिशीकान् वेपमानगात्रान् विलुप्तवाक्शक्तीन् तन्निवासिनोऽन्विष्यान्विष्य मध्यवर्तिनि महति प्राङ्गणे बलादानेतुम् ।

एकत्रीकृतेष्वेवं हठात् सर्वेषु ग्रामणीकुटुम्बजनेषु विस्मयजडेषु, तेषामश्वारोहाणां यूनामग्रणीः, कृष्णवस्त्रावृतार्द्धमुखतयाऽसितकवचावृतशरीरतया निःशब्दचेष्टिततया च दुर्लक्ष्यव्यक्तिविशेषोऽपि धीरोद्धतेन गतिविशेषेण प्रभुताप्रभविष्णुना व्यवहारविशेषेण चानुमेयविशेषः, सहसाऽग्रे सृप्त्वा, पश्यतामेव सर्वेषां, वृद्धं सामन्तं कूटदन्तं परिगलितप्रायवस्त्रं जराधवलेषु विलुलितेषु केशेषु गृहीत्वा निर्दयं चकर्ष ।

आरभत च ताडयितुमसितविद्युल्लतासन्निभया कृष्णमहासर्पतुल्यया कशया ।

प्रामाणिकराजपुरुषत्वेन प्रख्यातं, मगधराजसभासदस्यं, निष्कलङ्कचरित्रं, न्यायप्रियं निरपराधं स्वामिनं तथा पीड्यमानमवलोक्य सर्वे तस्य सेवका उत्तेजिता बभूवुः । न शेकुः परन्त्वपहृतशस्त्रतया किंचिदपि प्रतिकर्तुम् ।

आदरणीयं परोपकारतत्परं दयालुस्वभावमजातशत्रुं वृद्धं स्वपतिं निष्कारणमेव पश्यतां सर्वेषां सेवकानामवलोकयतां सर्वेषां कुटुम्बजनानांतथानिर्दयं ताड्यमानं दृष्ट्वा वेपमाना भयकातरा तस्य वृद्धा भार्या उच्चैराक्रोष्टुमारभत । तामनु च भयाक्रान्ताः सर्वे बालकाः सर्वास्तत्स्वसारः स्नुषा, अन्याश्चाबलाः । तासां स करुणक्रन्दनध्वनिः रुदद्ग्रामसिंहरवमिश्रितो विदारयन् सर्वतोव्यापिनीमुत्तेजनाक्षुभितां श्मशानशांतिं भयविस्फारिताक्षं पश्यतां सर्वेषां नरनारीजनानां हृदयानि प्रकम्पयामास ।

सामन्तः कूटदन्तस्त्वनभ्रवज्रपातसदृशं तत् संकटमापतितमवलोक्य परं विस्मितोऽपि, संकटस्याऽऽकस्मिकतया प्रतीकारासमर्थं स्वसेवकवर्गं दृष्ट्वा

CC-0 Pulwama Collection. Digitzed by eGangotri

खिन्नोऽपि, 'कस्यैवापराधिनो मया न्यायानुसारं दण्डितस्यायं वैरनिर्यातनप्रयासः स्यादुभयलोकविरुद्ध'—इत्यनवरतं विचिन्त्य विनिश्चेतुमपारयन्नपि, 'कथमिवैताद्दशं निघृणं काण्डं मूकबधिरपङ्गुवन्मुखं व्यादाय केवलमवलोकयन्तः नागरिका यथासम्भवप्रतीकाराय गृहीत्वा शस्त्राणि यानि कान्यपि पुरतो नागच्छन्ती'ति विस्मयमानोऽपि, मगधराजकीयसेवावशान् माद्रदेशं गतान् निर्भीकानभिमानधनान् प्रबलवीरान् स्वतनयान् बारं बारं स्मरन्नपि, स्वकौटुम्बिकान् पांसुलपादसाधारणजनवदुच्चैर्विलपतो दृष्ट्वा क्रुद्ध्यन्नपि, यमराजस्येव परिगृहीततरुणतनोः, प्रतिहिंसोद्रेकस्यैव गृहीत्वा मानवदेहं साक्षादवतीर्णस्य तस्य प्रज्वलदेकमात्रालातप्रकाशितमूर्तेः, वयसा यवीयस इव परिलक्ष्यमाणस्य, यवीयस्यपि वयसि सामर्थ्यप्रचण्डस्यानावृताभ्यां क्रोधरक्ताभ्यां बालिशाभ्यामपि क्रौर्योदग्राभ्यां-वमद्भ्यामिव निर्मर्यादिमहंभावं-नयनाभ्यां तमेवैकाकिनं निर्निमेषं सोपहासमिवावलोकयतस्तस्याऽऽततायिप्रमुखस्य कशाघातान् तीव्रान् मर्मविदारकान् महता धैर्येणासहत,-उट्टङ्कयन् स्वस्मृतिपटले तस्याऽऽकृतिं तस्याऽऽचरणं तस्य सम्मोहनं दृष्टिपातं,—अनुच्चारयन् एकमप्यभ्यर्थनाशब्दं,—अपातयन् एकमप्यश्रुबिन्दुम्,—अप्रकटयन् स्वल्पमपि वेदनालेशम्।

अपतच्च शीघ्रमेव धरणीतले विदीर्णवस्त्रः शिथिलदेहः लम्बमानशिरोधरः रुधिरार्द्रमूर्तिः शोणितारक्तकेशो विलुप्तप्रायचेतनोऽसमर्थः सोढुमधिकतरमत्याचारिप्रहारम्।

तं च तथा भूमौ पतितं निश्चेष्टं मृतप्रायमवलोक्य स प्रमुखः पादप्रहारेण तं संभाव्य स्वानुयायिनस्तन्निवासं लुण्ठितुं निःशब्देनेङ्गितेनानुजज्ञौ। तदनुज्ञासमकालमेव सर्वे ते निवासाभ्यन्तरे निष्प्रतिबन्धं भ्रमन्तो भयवाचालानां कौटुम्बिकानां परिजनानामनुनयवचांस्यवधीरयन्तो महार्हाणि वस्त्राणि बहुमूल्यानि भूषणानि च यथेच्छमपहर्तुमारेभिरे। विनाशयितुं चान्यानि तानि भित्तिचित्रादीनि यानि तेऽपहर्तुमसमर्थमात्मानं कल्पयाञ्चक्रिरे।

साक्षात्कृत्य तं तामसिकमत्याचारं लज्जितमिव नैशं तमस्ततोऽपसर्तुं मनश्चक्रे। निरपराधपीडनं दृष्ट्वा क्रुद्धस्य विधातुः क्रोधच्छटेवारुणरागच्छटा प्राचीं रञ्जयितुमारेभे। अवलोक्य च तां ते, सावधानस्य प्रमुखस्याऽऽदेशं निःशब्दमनुसरन्तः, परित्यज्याङ्गणमध्ये निपतितं वृद्धया शोकशुष्ककण्ठ्या भार्यया कथं कथमपि परिचर्यमाणं सामन्तं कूटदन्तं—पश्यतामेव सर्वेषां दुःखव्याकुलानां श्रान्तानां परिजनानां, क्लान्तानां च शोकमूढानां कौटुम्बिकानां, दुःशंकाताभ्यद्धृदयानां भयजडानां नागरिकाणां,—स्वान् स्वानाश्वानारुह्य तेनैव राजगृहमार्गेण कृतप्रस्थानाः, शनैः शनैश्चक्षुर्विषयतामतिचक्रमुः—नैशध्वान्तावशेषनिगीर्णमूर्तयः, प्रेतिका इव नारकीयेभ्यो विश्रामस्थलेभ्यः प्रतिनिवर्तमाना ब्राह्ममुहूर्तोदयमसहमानाः।

CC-0 Pulwama Collection. Digitzed by eGangotri

विलयमात्यन्तिकं गतेषु तेष्वत्याचारिषु···तावत्कालपर्यन्तं निःशब्दं निष्क्रियं निश्चैतन्यं तन्निर्घृणं काण्डं साक्षात्कुर्वन्तो, मूढवत् व्यादाय मुखानि तदाततायिकृत्यमवलोकयन्तो ग्रामीणाः कान्दिशीकमिव स्वसाहसं महता प्रयासेन लभमानाः, कण्ठगतानिव प्राणान् पुनः संस्थापयन्तो, महता संरम्भेण सामन्तनिवासं विविशुः। परिजनैः कथमपि संज्ञां लम्भितं स्वप्रमुखं परिवेष्ट्य क्रोधमाक्रोशं च प्रकटीचक्रुः।

एतावत्कालपर्यन्तं समीपवर्तिनामन्यान्यगृहाणां वातायनेभ्यो द्वारेभ्यश्च घटनाक्रमं सर्वं सरोमाञ्चं पश्यन्त्यः नार्योऽपि महतौत्सुक्येन घटनास्थले सपरिवामागत्य सामन्तपत्नीं स्वभर्तारं लब्धसंज्ञं विलोक्य, किञ्चित्प्रकृतिमापन्नां, तत्समीप एव चोपविष्टां, परिवृत्य स्वसमवेदनामुद्वेगभावनां चोच्चैर्व्यानञ्जुः।

एकत्रभूताश्च बालाः, स्वप्रकृतिमनुसरन्तः, सर्वं काण्डं महतोत्साहेनाभिनिन्युः।

क्रमशः न्यूनीभूते तेषां सर्वेषामाक्रोशे क्रोधे समुद्वेगे ते सर्व एवात्याचारिणां वास्तविकस्वरूपविषये स्वं स्वमभिप्रायं गदितुमारभन्त। केचित् तान् मगधराज्यसीमातिवर्तिनोऽराजकप्रायाद्वनप्रदेशाल्लुण्ठनेच्छयाऽकस्मादापतितान् चौरान् समभावयन्। अपरे तेषां राजगृहमार्गेणाऽऽगमनं गमनं चोल्लिख्य तन्मतं निराकुर्वन्तस्तान् मगधराज्यान्तर्वर्तिन एव स्थानात् कस्मादप्यागतान् साहसिकानमन्यन्त। अन्ये तान् मगधेश्वरकृपापात्रस्य कूटदन्तस्य प्रतिपक्षिणा केनचिदीर्ष्यालुना सामन्तेनाधिकारिणा वा प्रकटतोऽपकर्तुं किञ्चिदप्यसमर्थेन प्रेषितान् द्रव्यदासानुद्दण्डानाततायिनो मेनिरे।

ऐकमत्यं चाऽऽपन्ना यत्—'सर्वेऽपि ते साहसिका दुर्लक्ष्यविशेषा अपि वयसा यवीयस इवावभासन्त। अतस्तेषां यथार्थस्वरूपज्ञानार्थं सूचकानि प्रमाणानि नूनं गवेषणीयानि। तैर्विनाऽपराधिनां वास्तविकस्वरूपज्ञानमशक्यम्। तद्विषये राजकीयदण्डधारणं चाशक्यतरम्'-इति ते सर्वेऽपि राजगृहमार्गे सामन्तनिवासरथ्यायां निवासप्रधानद्वारस्याऽऽसमन्तादभ्यन्तरवर्तिनि प्राङ्गणे च सूचकानि चिह्नानि दैववशात् पतितानि यथासम्भवमन्वेष्टुमारभन्त।

व्यापृतानामेवैवं तेषां, स वृद्धः सामन्तः श्रान्तः क्लान्तः प्रातःकालिकशैत्यबाधापीड्यमानसर्वाङ्गः प्राङ्गणं विहाय कक्षाभ्यन्तरे गन्तुं तत्र च विश्रमितुं मनश्चक्रे। स्वाभिमानी चायाचित्वैव कस्यापि साहाय्यमेकाकी समुत्थाय शनैः शनैः मार्गमाक्रमितुं पदानि चिक्षेप। प्राप्तश्च महता कष्टेन कक्षद्वारमन्तः प्रविशन्नेव सहसाऽक्षिलक्ष्यीचकार द्वारकपाटकोणे गूढं निपतितं घनीभूततिमिरवशादीषल्लक्ष्यं किमपि भूषणमिव।

CC-0 Pulwama Collection. Digitzed by eGangotri

'किमेतदिति' स्वाभाविकजिज्ञासावशाद्वाऽत्याचारिपुरुषसूचकप्रमाण-कौतूहलाद्वा नियतिवशाद्वा-न जाने किमिति-व्यापृतेष्वन्यत्र परिजनेषु सुहृत्सु च महता कष्टेन जानुभ्यामवनिं गतस्तस्मिन्नेव क्षणे हस्तेन तदाचकर्ष। सुनिपुण-मवलोकयामास च प्राभातिके मन्दप्रकाशे।

निर्निमेषमवलोकयत एव तस्य रेखाङ्किता म्लाना मुखमुद्राऽऽदौ कौतूहला-ऽऽविष्टा ततो विचारमग्ना क्षणमात्रं किंकर्तव्यमूढाऽन्ते च दृढनिश्चयकठोरा-ऽभवत्।

अचिन्तयच्च सः—भूषणं खल्वेतत्···सौवर्णं रत्नखचितं मणिबन्धनमेतत् ...न न मणिबन्धकङ्कणमेतत्···मया—तथा निर्दयं कशया ताडयतोऽत्याचा रिणस्तस्यमणिबंधे बध्दमवलोकितमासीत्। शङ्के-तदधस्तात् प्रच्युतं वेगवशादस्मिन् कोणैकदेश आपतितम्। अथवा-नास्त्येवात्र शङ्का। एतत् तस्य परिचायकंनूनं भवेत्। पूर्वदृष्टमिवैतत्···कुत्र नु खलु मया···'।

चिन्तयत एव चैवं तस्याकस्मात् कर्णपथमापतत् कस्यचिदनुचरस्येव पद-ध्वनिः। तस्मिन्नेव क्षणे स तन्मुष्टिगोपितं व्यधात्। प्रविश्य कक्षाभ्यन्तरे मन्थरया गत्या शय्यायां वेदनाज्वलच्छरीरमक्षिपत्। न्यमीलयच्च क्लान्ते विचार-मग्ने वृद्धनेत्रे विश्रामार्थं किल।

अनेन च समयेन-वेदनाजडा सा दुर्निशा कथमप्यन्तं ययौ। तादृशस्यात्या-चारस्य मूकाः प्रेक्षिकास्तारा आत्मनोऽकिंचित्करत्वं पर्यालोच्यलज्जिता इव विलयमात्यन्तिकं ययुः। अतीतायां कालरात्रौ घटितं तद्वृत्तं परस्परं सोद्वेगं श्रावयन्त इव सद्यः प्रबुद्धा खगा उच्चैरालपन्। निरपराधमपमानितस्य तस्य वृद्धस्य सामन्तस्य दुःखमवलोक्य खिन्नाया दिनश्रियो दीर्घनिःश्वास इव मन्दं मन्दं ववौ प्राभातिकः समीरः। आत्मनोऽनुपस्थितिकाले घटितं तन्निर्घृणं कर्णोप-कर्णिकया निशम्य क्रोधरक्त इव भगवान् दिनकरः, वृद्धं तं प्रत्यक्षमवलोक्य विनिश्चेतुं नाम पूर्वाचलशिखरं त्वरयाऽऽरुरोह।

सर्वे च नागरिकाः सामन्तनिवासे तदासमन्ताच्च सर्वत्रान्विष्याऽपि क्षुद्रतम-मपि प्रमाणं सूचकमनुपलभ्य खिन्नाः, शनः शनैः स्वावासं न्यवर्तन्त चर्चामुखराः।

सामन्तस्य कौटुम्बिका अपि जागरणश्रान्तां दुःखम्लाना आवेशक्लान्ता 'भाग्यानि स्वानि निन्दन्तः' स्वस्वशय्यायां निपत्य तन्द्राम्बुधौ निमज्ज्य तद्घटना-चक्रं विस्मर्तुं प्रायतन्त मूकाः।

CC-0 Pulwama Collection. Digitzed by eGangotri

## द्वितीयः परिच्छेदः

न तु वृद्धः कूटदन्तः। स हि, निश्चेष्टं पतितः शय्यायां, मीलितलोचनोऽवधीरयन् क्षतपीडास्तन्द्रामग्नमिवाऽऽत्मानं नाटयन्, तस्यैव कङ्कणस्य विषयेऽचिन्तयत्—

'एतत् कङ्कणं मया, राजकीयकार्यवशादतीत एव पक्षे राजधानीं गतेन, स्वनामधन्यं महाराजं बिम्बसारं न्यायसभागृहे साक्षात्कुर्वता, तस्यैव मणिबन्ध आबद्धं दृष्टम्। नहि नहि। अशक्यं खल्वेतत्। न्यायप्रियो दयालुः निष्कपटस्वभावो मगधराजः कपटकुटिलोऽतिनिर्दयः निष्कारणाकरुण श्चात्याचारी। परस्पर विरोधो नूनं महान्। किमिव च मया स्वामिनोऽपराद्धं यद्वशात् स मामेवं दण्डयेत्? तदप्येवम्? अकथयित्वैव मां ममापराधम्? अकृत्वैव न्यायविचारम्? एवं जुगुप्सित्वाऽऽत्मानम्?

'एतत्तु कस्यचिदप्यविवेकिनः सुलभकोपस्योद्दण्डस्यैव कृत्यं परिलक्ष्यते।··· अपि च-कङ्कणमेतदाकारेण लघु। नैव महाराजस्य भवितुमर्हति। परंत्वस्य कङ्कणस्य मध्यवर्तिनो हीरकस्य समन्तादुत्कीर्णं चिह्नं स्पष्टमेव मगधराजवंशस्य। नूनमेतत्स्वामिना स्वामिवंश्येनैव भवितव्यम्।

'अहो! कङ्कणमेतन्मया न्यायसभागृहे तस्मिन्नेवावसर आगतस्य, स्वपितुः समीपे समुपविश्य न्यायविचारं शृण्वतो नाम युवराजस्याजातशत्रोर्मणिबन्धे दृष्टमासीत्। अत एवैतदाकारेण लघु। युवराजो हि द्वादशवर्षवयस्कः। अतीतायां निशायां सूक्ष्मेक्षिकयाऽवलोकिता मया तस्यात्याचारिणो देहयष्टिरपि युवराजस्यैव सदृशी। तस्य गर्वोद्धता दृष्टिरपि। समवयस्कानां तुल्यवृत्तान्तानामन्येषां सादिनां सादरमिव तेन सह वर्तनमप्येवं सत्युपपद्यते। राजगृहमार्गेण तेषामागमनं गमनमपि। परन्तु···परन्तु···किमिव मयाऽपराद्धं युवराजस्य? पर्यालोचयन्नपि न विभावयाम्यात्मनस्त्रुटिम्। युवराजः स्वभावेनैवोद्धतः स्वेच्छावृत्तिरधीरो दुर्दमनीय क्रोध इति तु मया श्रुतं राजधान्याम्। महाराजः स्वस्यैकमात्रस्य पुत्रस्य वर्तनेन स्वभावेन च खिन्नस्तं संस्कर्तुं यथासम्भवं प्रयतत-इत्यपि मया श्रुतम्।

CC-0 Pulwama Collection. Digitzed by eGangotri

तथापि-विनैव स्वल्पतममप्यपराधं स मामेवं दण्डयेदित्यपि न तर्कसङ्गतमिवाऽऽभाति। अहं हि तदा राजगृहनिवासिनां संपन्नकुलीनानां केषाञ्चित् स्वेच्छाचारिणां यूनां विषये मगधराजस्य न्यायसभायां निवेदनं कर्तुं गत आसम्। ते हि तरुणा मृगयार्थं स्वच्छन्दं भ्रमन्तो मदधीनानां दीनानां कृषीवलानां कुटुम्बान्यसकृदपीडयन्। मया वारं वारं बोधिता अपि स्वोद्दण्डवर्तनान्न व्यरमन्। न्यायसभायामुपविष्टेन मगधेश्वरेण मन्निवेदनं निशम्य न्यायविचारार्थमाहूतास्ते तरुणा यदा भयग्रस्ताः शुष्कमुखाः नृपसमक्षमुपस्थिताः स्वापराधं स्वीचक्रुस्तदा क्रुद्धेन तेन सकटुशब्दं भर्त्सिता मां ततो निष्क्रमणात् पूर्वं विषदिग्धयेव दृष्ट्या ददंशुः··· अपि नाम ते तरुणा युवराजस्य सुहृदः ? एवमेवैतत्। श्रुतं मया राजगृहेऽसकृद्यत् उद्दामप्रकृतिर्युवराजः स्वतुल्यवृत्तान्तैः सगन्धिभिः मित्रैः समयं वृथा यापयन्नास्त इति। ···अपि नाम तैस्तथा दण्डितैः प्रोत्साहितो युवराजोऽतीतरात्रौ दुराचारिदुर्जनवदवर्तत।···कदाचिद्युवराजेन सहाऽऽगता अन्येऽश्वारोहास्ते तरुणा एव स्युः।···एवमेवैतत्।

'तर्हि···किं नु मम कर्तव्यम् ? संदेहविषं त्वेतत् सर्वजनसमक्षं प्राकट्यं नार्हति। तथा कृते हि महान् जनापवादः स्यात्। परन्तु-निर्घृणमेतत् कृत्यं यदि कापुरुषेणेव मया सोढं मूकभावमाश्रित्य तर्ह्येतेषामुद्दण्डानां यूनां स्वेच्छाचरणं शीघ्रमेव निर्मर्यादं स्यात्। न च तदिष्टम्। सति हि तथा मगधराजस्याऽऽयतिरेव संकटाकीर्णास्यात्। अतो वृत्तमेतन्मगधराजायावश्यमेव निवेदनीयम्। ···अपि नाम युवराजस्यैतस्मिन् प्रामुख्येन सहभागित्वं स्वामिसमक्षं प्रकटीकरणीयम् ? स हि तन्निशम्य क्रुद्धः खिन्नश्च स्यादित्यत्र न संशयः। परन्तु···का गतिः ? युवराजोऽपि सत्येवावसरे यथोचितं दण्डितः सन्मार्गं प्रापणीयोऽवश्यमेव। अन्यथास्वनामधन्यैर्महाराजभट्टीयैः प्रस्थापितस्यास्य राजवंशस्य विनिपातो नातिदूरभावी।'

'तन्निश्चितमेतद्यत्-मगधराजायाऽऽततायिकृत्यमेतन्निभृतं निवेदनीयम्। स्वसंदेहबीजं च। तत्पश्चात्तु सः स्वयमेव यथोचितमनुष्ठास्यति।'

विनिश्चित्य चैवं स खिन्नो वृद्धश्चिरात् खलु तन्द्रावशो बभूव।

एवं कृतनिश्चयस्य धैर्येण महता क्षतवेदनाः सहमानस्य चातुर्येण रहस्यं विज्ञातमाप्ततमेभ्योऽपि जनेभ्यो गोपायतः प्रयत्नेन महताऽऽत्मानं सर्वजनसमक्षं क्षुभितमप्यसमर्थं प्रकटयतो, वृद्धया सेवातत्परया भार्ययाऽहर्निशं प्रतिक्षणं परिचर्यमाणस्य वार्धकावस्थायामपि सबलतया शरीरस्य प्रतिदिनं स्वास्थ्यलाभमधिकाधिकं कुर्वतस्तस्य वृद्धस्य पक्ष एको मास इवातिचक्राम स्वामिसमक्षं गूढमप्रियं सत्यं प्रकटीकर्तुं त्वरमाणहृदयस्य।

CC-0 Pulwama Collection. Digitzed by eGangotri

सर्वथा स्वस्थं प्रवासक्षमं चाऽऽत्मानमनुभूय स दैनंदिनानि कार्याण्यनुतिष्ठन् शीघ्रमेव राजगृहस्थितकेन्द्रीयकोषागारकार्यार्थमिव चचाल राजधानीमुद्दिश्य सुगोपितगृहीतरत्नकङ्कणो महाप्रमाणमश्वमारूढः छायामात्रद्वितीयः ।

प्रवसंश्चानवरतं रात्रौ राजकीये पथिकविश्रामगृहे कृतविश्रामोऽपरेद्युः पश्चिमाशामवलम्बमाने मन्दातपे तपने सायंसन्ध्याऽऽगमनवार्त्तामातपक्लान्तेभ्यो खगेभ्यः निवेदयितुमिव मन्दं मन्दं वहति सायंसमीरे मगधराजधानीं प्राप । प्रविश्य च तस्यां महाप्राकारपरिवेष्टितायामुत्तराशाऽभिमुखेन खड्गपाणिसैनिकपरिरक्ष्यमाणेनद्वारेणागत्यैव नियतं विश्रामस्थानमकृत्वैव वेषपरिवर्तनं मार्गधूलिधूसरित सर्वाङ्ग एव प्रवासम्लान एव राजप्रासादमुद्दिश्याश्वं यात्राश्रान्तगात्रं प्रेरयामास ।

प्राप्य च तं भव्यं सुधाधवलं सायंसन्ध्यारागरञ्जितं मन्दसमीरदोलायमान हर्यंकपताकालंकृतशिखरं विविधप्रयोजनाऽऽगत-प्रतिनिवर्तमानोच्चावचाधिकारिगणवाहनसंकुलचत्वरप्रदेशं सुतीक्ष्णभल्लोदग्ररक्षकगणरक्ष्यमाणमहाद्वारं राजदर्शनार्थमधिकारिणं समर्थं विज्ञापयामास ।

तेन च विज्ञाय कार्यगौरवं तस्मिन्नेव क्षणे समादिष्टेन प्रतिहारिमुख्येन समुपदिश्यमानमार्गोऽतिक्रम्यानेकान् विविधवृत्तान्तमनोहारिणः प्रकोष्ठानारुह्यानेकाः सोपानततीः प्रासादशिखरवर्तिनि पश्चिमाशाभिमुखग्रारक्तदिनमणिकिरणाऽऽलोकिताऽऽभ्यन्तरे मन्दसमीरलहरीदोलायमानवातायनयमनिके नातिविशालेसायंविश्रामकक्षे निःशब्दमविशत् । अपश्यच्चानेकबारमवलोकितमपि प्रतिवेलमनवलोकितपूर्वमिव भासमानं, महार्हे चीनांशुकाच्छादिते रजतपर्यंके सुखमुपविश्यास्ताचलशिखरतिरोहितस्य भगवतो दिनकरस्याऽऽरक्तां प्रभां सुदूरावस्थिताचलश्रेणीशिखरचुम्बिनीं निर्निमेषमवलोकयन्तं, नीलगगनविहारिणीं सान्ध्यदिनकरकरोद्भासितरञ्जितधवलवर्णां 'महामहानीलशिलारुचः कंसकृषः' कण्ठे विराजमानां प्रवालमालां विडम्बयन्तीं कपोतमालां सकौतुकं ध्यायन्तं, प्रौढवयसमपि रेखाङ्कितमुखमुद्रतया कृतवार्धकप्रवेशमिव भासमानं, सर्वतः प्रसृतसन्ध्यारागरञ्जितधवलकेशमारक्तधवलमृदुलदुकूलाऽऽच्छादितोत्तमाङ्गं परमविश्वासपात्रेण सेवकेन परिचर्यमाणमात्मनैव किमपि किमपि सस्मितं विचारयन्तं प्रसन्नं मगधराजं बिम्बसारम् ।

मार्गप्रदर्शकेन प्रतिहारिणाऽऽदरमन्द्रया वाण्या निवेदितप्रवेशश्च सहसाऽभिमुखीभूतं मन्दस्मितावभासितप्रशान्तमुखकमलं तं सादरमनमत् । स्वीकृतनमस्कृतिना तेन सस्नेहमासनपरिग्रहायाऽनुज्ञातः नातिदूरवर्तिन्यासने एकस्मिन् समुपविष्टो मुहूर्तं तूष्णीमतिष्ठत् । पृष्टश्च तन्मलिनवेषं परिलक्ष्य किञ्चिच्च-

CC-0 Pulwama Collection. Digitzed by eGangotri

कितेन स्वामिनाऽऽगमनप्रयोजनं सादरं निभृतालापार्थमवसरं स्वल्पमयाचत । तस्य तां विज्ञप्तिं निशम्य किञ्चिद्विमनस्को मगधेश्वरो दृष्टिक्षेपेणैकेनैव साकूतेन परिचारकं परमविश्वासपात्रमपि—समादरयन् स्वसामन्तस्याभ्यर्थनां—ततोऽपसरणार्थमाज्ञापयामास । अपसृते च तस्मिननिच्छापूर्वकमिव, भृकुटिभङ्गेनैव तं सामन्तं स्वमनोगतनिवेदनार्थमाज्ञापयामास ।

कूटदन्तस्तु राजतेजोभासुरयाऽनुभवविदग्धया निर्निमेषया दृष्ट्या तन्मुखमेवावलोकयतः स्वामिनः किञ्चित्पिंगलाभ्यामक्षिभ्यामक्षिणी निगडयितुं सेवाभाववशादसमर्थोऽधःकृतदृष्टिः सर्वं तदत्याचारकाण्डं सविस्तरं निवेदयितुमारभत ।

यथा यथा च तस्य करुणगाथाऽग्रे ससार तथा तथा तस्य स्वरः प्रयत्नसंयमितोऽपि शोकशुष्कस्तस्याऽऽननं क्रोधरक्तं, मगधराजस्य मुखमादौ सावधानं ततो विलुप्तस्मितं ततः समुपजातकौतूहलं ततश्चिन्ताग्रस्तं ततः कोपरक्तं संवृत्तम् । सायंविश्रामकक्षश्च क्रमश आलोकहीनोऽन्धकाराक्रान्तो बभूव ।

यदा तु स वृद्धो मागधः क्षतपीडापीड्यमानस्याऽऽत्मनः शय्याग्रहणार्थमाभ्यन्तरकक्षद्वारमुद्दिश्य मन्दं मन्दं प्रसर्पणमुपवर्णयन्, तद्द्वारकपाटकोणैकदेशे पतितं रत्नकङ्कणमाततायिप्रमुखस्य मणिबन्धात् प्रच्युतमत्याचारिसूचकप्रमाणत्वेनोपस्थापयामास तदा तस्य स्वर आवेगघर्घरस्तस्याऽऽननमाक्रोशकलुषं, मगधराजस्य मुखं लज्जाभारभुग्नं संवृत्तम् । सायंविश्रामकक्षश्चासिततडिल्लतोल्लासितान्धकारपरिपूर्णो बभूव ।

द्वितीय एव क्षणेऽश्रद्दधान इव स्वकर्णौ, अविश्वसन्निव स्वदृष्टिमवधीरयन्निव परमविश्वसनीयमपि तं वृत्तान्तं, मगधराजस्तस्य सामन्तस्य प्रसारिते कठोरे करतले मन्दं मन्दं प्रकाशमानमुपहसदिव पितृहृदयस्यान्तिमामाशां, सान्ध्यतिमिरवशादस्पष्टविशेषं, रत्नकङ्कणं झटिति स्वहस्तेनाऽऽदाय महता वेगेन वातायनसमीपे गत्वा क्षीयमाणे आरक्ते सान्ध्ये प्रकाशे सुचिरमवलोकयामास । विगतशङ्कश्च तन्मध्यवर्तिनो हीरकस्य समन्तादुत्कीर्णं मगधराजवंशचिह्नं हर्यंकं विलोक्य हतोत्साहः परिलुप्तबलः शिथिलवृषस्कन्धः नतमस्तकस्ततः परावृत्य पर्यङ्के कथमप्युपाविशत् ।

कतिपयक्षणानन्तरं च समुद्धरन्निवाऽऽत्मानं विषादसागरादतिगहनात्, पर्यवस्थापयन्निव स्वचित्तमाघातविचलितं, स्मारयन्निवाऽऽत्मानं कर्तव्यभरस्य, सः, तिमिरवशादस्पष्टमुखमुद्रः, समर्प्य स्वदुःखं स्वपरिभवं स्वस्वामिने न्यूनीभूतभारमिवं तं वृद्धं सामन्तं 'यथोचितं विधास्याम' इति वाण्याऽस्फुटवर्णया समाश्वास्य तद्गृहाय विससर्ज ।

CC-0 Pulwama Collection. Digitzed by eGangotri

चिरं च तूष्णीमुपाविशत्-मूर्तिवत्-तस्मिन्नेव घनतरीभूतान्धकारदुर्लक्ष्यविशेषे कक्षेऽवलोकयन् विनष्टसूर्यं विलुप्तसान्ध्यप्रभं नक्षत्रहीनं प्रबलतिमिराक्रान्तं गगनाङ्गणं···चिन्तयंश्च स्वात्मनैव किमपि किमपि।

हठाल्लम्भितसंज्ञ इव चाकस्मादुदीर्णेन प्रबोधितान्तःपुरारामवृक्षनीडनिद्रालुपतत्रिकुलेन युगपत्प्रहतपटुपटहझल्लरोशङ्खनिनादोपबृंहितेन घनतिमिरे गगनाङ्गणे निःशब्दे स्वैरं परिभ्रमता तीव्रमधुरेण राजपुरोहितगीयमानेन राजकुलदेवतासान्ध्याऽऽराधनागीतेन, शनैः शनैरुत्थाय, तस्मात् कक्षात् बर्हिर्निर्गतो द्वारसमीप एव निदेशं प्रतीक्षमाणं, स्वामिन आकस्मिकं मनोवस्थाविपर्ययं वीक्ष्य चिन्तातुरं तं परिचारकं महाराज्ञ्याः कोशलदेव्या अन्तःपुरयायिनं मार्गं प्रदर्शयितुमाज्ञापयामास। तेन उपदिश्यमान मार्गश्च, समतिक्रम्यानेकान् प्रज्वालितरजतदीपप्रभाप्रकाश्यमानान् विविधवृत्तान्तान् प्रकोष्ठान्, स्वीकुर्वन् प्रदोषकाले तस्यान्तःपुर आगमनं सर्वथाऽनपेक्षितमवलोक्य परं विस्मितानामन्तःपुरिकाणां सादराः प्रणामाञ्जलीरन्यमनस्कतया, प्राप महाराज्ञ्याः सौवर्णदीपदण्ड प्रकाशोज्ज्वलं महार्हाऽऽस्तरणसञ्छादितभूतलं मन्दसमीरदोलायमानयवनिकातिरोहितवातायनं सर्वतः प्रसरद्धूमलहरीसुवासितमन्तःपुरम्।

महाराज्ञी कोशलदेवी तु राजकुलदेवतादर्शनात् सद्यःप्रत्यागता, राजपुरोहितकृतसाक्षतमङ्गलतिलकभूषितविस्तीर्णललाटपट्टा महार्हनीलकौशेयवस्त्रावृततनुदेहलता रत्नखचितसौवर्णमङ्गलसूत्रालङ्कृतकम्बुग्रीवा धवलकान्तिमणिभूषितसुकोमलनासापुटा प्रौढावस्थायामपि महाकुलीनत्वाद् वा पातिव्रत्यप्रभावाद् वाऽप्रत्याख्येयविशेषाऽधिगत्य ससम्भ्रमं पुरतः प्रधाविताया: प्रधानप्रतिहारिण्याः सकाशाद्वार्त्तां मगधराजागमनस्य हृष्टा, किञ्चित् कौतूहलान्विता, परित्यज्यान्यत् कार्यं भर्तुः स्वागतार्थं पुरत आगच्छत्। सादरं च तमभ्यन्तरमनयत्।

पत्युश्चित्तवृत्तिमत्यन्तं विचलितामनुमाय प्रथम एव क्षणे दृष्टिमेलनस्य विलुप्तोल्लासा चिन्ताभ्रपटलसञ्छादितमुखचन्द्रा सावधाना तं सुखमुपविष्टं वीजनादिभिः स्वयं परिचरन्ती तत्तत्कार्यमिषेण सर्वानपि परिजनानपसार्यापृच्छत् शनैः शनैस्तदवसादकारणम्।

अभिन्नहृदययाऽऽबाल्यसङ्गिन्या सुखदुःखानुवर्तिन्या धीरस्वभावया भार्ययेत्थं पृष्टो बिम्बसारः, स्वदुःखभारं तया सह संविभज्यानुभवितुमधीरः, स्वकर्तव्यनिर्धारणे तया सह विचारविनिमयं कर्तुमुत्सुकः, सर्वमेव घटनाकाण्डं तस्यै न्यवेदयत्। अदर्शयच्च तस्यै तत् स्वर्णकङ्कणम्। कोशलराजभगिनी तु सद्यःपरिसमाप्ते द्वादशवर्षग्रन्थिमहोत्सवे तथैव युवराजस्य मणिबन्धे साशीर्वादमाबद्धं तत् कङ्कणमभिज्ञाय, निशम्य च सर्वं वृत्तान्तं, वंशापवादकालुष्यग्रस्तमुखचन्द्रा, चिन्ताभारजडा

CC-0 Pulwama Collection. Digitzed by eGangotri

चिरं तूष्णीमतिष्ठत् । असूचयच्च भर्तारं—'युवराजोऽपि विषयेऽस्मिन् श्रोतव्यो-ऽवश्यमेव' ।

क्षणमेकं विचार्य तेनानुज्ञाता च प्रतिहारिणीं समुत्सुकहृदयां चेल्लनादेव्या अन्तःपुराद्युवराजमानेतुमादिशत् ।

आनीतं च तं, त्रयोदशे वर्षे सद्यःकृतप्रवेशमपि महाप्रमाणतया शरीरयष्टेः पूर्णविकसिततारुण्यमिव भासमानं, श्यामवर्णमपि तेजोविशेषभासुरमूर्तिं, बाल्य-वशान्नातिपुष्टमप्यप्रत्याख्येयविकसत्सामर्थ्यातिशयशालितनुं, किञ्चिदुद्भिद्यमान-श्मश्रुतयाऽविलुप्तबालभावमपि पराभिभविष्णुनयनोदग्रमुखमुद्रं, नात्युद्धतगति-विशेषमपि नमयन्निव प्रतिपदक्षेपं धरित्रीं, सशरीरमिवाऽऽविर्भवन्तं क्षात्रं प्रभावं, कृतविग्रहग्रहमिवाविकसितं शस्त्रसामर्थ्यं, मूर्तिमन्तमिव पराधिक्षेपं, दीर्घबाहुं, विस्तृतवक्षःकपाटविलसन्मौक्तिकैकहारं, सन्देशवाहिकया सह तात्कालिककौतु-कालापवशात् सस्मिताननमपि कक्षान्तःप्रवेशक्षण एव कठोरमुद्रं स्वजनकं गम्भीरा-कृतिं स्वज्येष्ठमातरं चाऽवलोक्य विलुप्तप्रसाद, सावधानं, किञ्चिदुच्छूननाडो-कलङ्कितविस्तीर्णललाटफलकं, दक्षमिव प्रतोकाराय, नतमिवाऽभिवादनाय स्वासन-ग्रहणायाऽऽदिशत् ।

अपृच्छच्च तं शान्तदृढेन स्वरेण, निगडयन्ती तद्दृष्टिं स्वदृष्ट्या धीर-गम्भीरया—'कुत्र खलु ते मणिबन्धकङ्कणम् ?'

अजातशत्रुस्तु कुशाग्रबुद्धिस्तस्मिन्नेव क्षणेऽनुमिताऽऽमन्त्रणप्रयोजनः, क्षण-मात्रं भाविपरिणामाऽऽशङ्काविचलितोऽपि द्वितीय एव क्षणे संनियमितचित्तः, सर्वथा समुपेक्ष्य मातृदृष्टिं पितरमेव शून्यदृष्ट्या कुत्राप्यवलोकयन्तमाह्वानस्थि-राभ्यां नयनाभ्यामवलोकयन्, शान्तदृढेनैव स्वरेण प्रत्युवाच—'उद्दण्डशासनार्थं प्रवसतो मम मणिबन्धात् कुत्राऽपि तत् परिभ्रष्टम् ।'

'क इव उद्दण्डः ? कथं च तस्य शासनं त्वया ?'—इति तीक्ष्णस्वरं पृष्टः पित्रा 'सः क्षुद्रः सामन्तः···कूटदन्तः···वार्धकपलितमतिः···क्षत्रियतरुणानां मृगया-ऽभ्यासे विघ्नान् समुपस्थापयन् स्वमर्यादा उल्लङ्घयामास वारं वारम् । अतः शासनं तस्याऽऽवश्यकमिति मत्वा मया मगधयुवराजेन स उचितं दण्डं लम्भित'—इति प्रतिब्रुवाणः, स्तोकमप्यविचलितो यदा स्वसहयोगिनामोल्लेखार्थं वारं वारं समादिश्यमानोऽपि नैव तेषां नामानि प्रकटीचकार, सर्वमप्युत्तरदायित्वमात्मन एव स्वीचकार, पश्चात्तापलेशमपि न दर्शयामास तदा क्रुद्धेन जनकेन भर्त्सितो, 'मगधयौवराज्यं न तव जन्मसिद्धम् । योग्यस्यैव ते तल्लाभसम्भवः । एतादृशेन च वर्तनेनाऽयोग्यतैव तस्य त्वयि दरीदृश्यते । तत् सत्येवावसरे आत्मनो वर्तनं संशोधय'——इति कटु प्रबोधितः, 'अस्यापराधस्य दण्डं शीघ्रमेव लप्स्यसे' इति

CC-0 Pulwama Collection. Digitzed by eGangotri

विसृष्टस्तयैवौद्धत्यपूर्णया गत्या, तयैव च पराधिक्षेपप्रवणया मुखमुद्रया ततो न्यवर्तत ।

निवृत्ते च तस्मिन्, महाराज्ञी स्वपुत्रस्य तद्वर्तनमुद्दण्डं साक्षात्कृत्य स्वयमुत्तेजिताऽपि, मनोऽवस्थां स्वभर्तुः सुष्ठु जानती, धृतधैर्या, मन्दं मन्दं जगाद—'स्वामिन् ! कुणीकस्यायमपराधो महानित्यत्र न सन्देहः । साक्षात् भवता कृतं न्यायविचारमगणयतोऽपरिपक्वामेव स्वसदसद्विवेकबुद्धिं सर्वथाऽनुसरतो, मगधराज्यसेवापलितकेशं स्वामिभक्तं तं सामन्तं तथा पीडयत, आवाभ्यां वारं वारं प्रबोध्यमानस्यापि पश्चात्तापलेशमप्यननुभवत, आवाभ्यां सहकारिनामोल्लेखनार्थमनेकवारं समादिश्यमानस्यापि तन्नामानि नैव प्रकटीकुर्वतस्तस्यायं व्यवहारः निःसंशयं निन्दनीयो दण्डार्हश्च । ···तथापि-बालस्वभावोऽयं न तथा निन्दनीयो दण्डार्हश्च यथाऽस्य बुद्धिदातारः । ते हि जन्मत एवाधोरप्रकृतिं सुलभकोपमकुतोभयस्वभावं तं परिवेष्ट्याऽऽपातमुखैर्दुरन्तैश्चाटुभाषणैस्तं परितोषयन्त, उच्छृंखलं तस्य वर्तनं तत्तदवसरप्रदानेन वर्द्धयन्तः, न केवलस्य कुणीकस्य न केवलस्य तत्पितुः न केवलायास्तन्मातुरपि तु समस्तस्य मगधराज्यस्याऽऽयतिमेव विनाशयन्ति । तन्मन्ये-यौवनावस्थायां पदमर्पयन्नस्माकमेकमात्रः पुत्रो, मगधराज्यस्यैकमात्र उत्तराधिकारी, प्रदूषकेभ्य एतेभ्यः रक्षितव्यः । रक्षितव्यश्च कालातिपातमधिकतरं परिहरद्भिरस्माभिः । रक्षणं च तस्य ··तमस्माद्राज्यादतिदूरावस्थिते स्थाने समुचिते सर्वथा विश्वसनीयानां निष्कलङ्कचरितानां निर्लोभानां कर्तव्यकठोराणां सन्निधौ स्थापयित्वैव···सम्भवि । अपि च-स्थान एतादृशे गुरूणामेतादृशानां सन्निधौ स आत्मनस्तीव्रवेगं स्वभावं संयमयितुं सामर्थ्यमपि प्राप्नुयात् । दुष्प्रभावेभ्यः परिरक्षितआत्मनः सहजानवगुणानपि जयेत् । भाविमहत्तमोत्तरदायित्वानुरूपं विविधशस्त्रशास्त्रनैपुण्यमप्यधिगच्छेत् ।···श्रुता खलु ख्यातिरनेकवारमस्माभिरार्यजीवकस्य मुखात् तक्षशिलाविद्यापीठस्य । तत्र पर्याप्तकालं शिक्षितः संस्कृतो युवराजो नियतमेवास्मदपेक्षानुरूपां सुशीलतां शीलयेत् । तत्-कथं मन्यन्त आर्यपुत्रचरणाः ?'

पृष्टश्चैवं मगधराजः प्रयासेनापसारयन् नैराश्यतिमिरं प्रत्युवाच—'देवि ! महती खल्वाशा तव यदस्माकं पुत्रः कुलभूषणः संपद्येत—इति । अहं तु···प्रतिक्षणं स्मारितोऽस्मि तस्योद्धतेन वर्तनेन तस्य भविष्यद्गिरः । (सनिःश्वासं)अस्तु नाम । भावि चेन्न तदन्यथा भविष्यति । अस्माभिस्तु स यावच्छक्यं सुसंस्कृतः कार्यः ।··· तत् किं कालातिपातेन ? श्व एवाऽऽर्यजीवकस्तं गृहीत्वा तक्षशिलां यास्यति । तत्र च कुलाधिपतये समर्प्य तं संस्कारसंक्रमणाय प्रत्यागमिष्यति' । वदंश्चैवं प्रतिहारिमुखेनाऽऽर्यजीवकमजातशत्रुं च तथा समादिशत् ।

CC-0 Pulwama Collection. Digitzed by eGangotri

युवराजमाता चेल्लना तु तस्मिन्निशामुखे स्वपुत्रस्य महाराज्ञ्याः कोशलदेव्या अन्तःपुरे तादृशमाकस्मिकमाह्वानं, ततश्चोत्तेजितस्यैव तस्य तत्समीपे प्रत्यागमनमसकृत्पृष्टस्यापि तस्यौद्धत्यपूर्णं मौनं—सर्वमेव घटनाक्रमं साक्षात्कृत्या-स्वस्थचित्ता यदाऽश्रृणोत् यद्युवराजो महाराजेन तक्षशिलाविद्यापीठे द्वादशवर्षाण्यध्ययनार्थं वस्तुं समादिष्टः, श्व एवाऽऽर्यजीवकेन सह ब्राह्मे मुहूर्ते प्रस्थानं करिष्यतीति तदा सा स्वभावत एव कातराऽनेकाऽऽयासलब्धं मगधराज्यस्यैकमात्रमुत्तराधिकारिणं स्वपुत्रं प्राणेभ्योऽप्यधिकतरं गोपायन्त्यनिष्टं किमपि प्रतिक्षणमाशङ्कमाना स्वतनयस्य, संकोणतया हृदयस्याविश्वसन्ती सपत्न्याश्चित्तौदार्यं, संशयशीलतयाऽन्तःकरणस्य सर्वामप्यन्तःपुरराजनीतिं स्वपुत्रप्रतिकूलामेव तर्कयन्ती, क्रोधावेशपरिलुप्तविवेकाऽऽरक्तनयनकमला प्रस्फुरदधरोष्ठपल्लवाऽऽवेगस्रस्तघनकेशपाशाऽनवगुण्ठितमस्तका प्रस्फुरन्नासापुटा, तस्मिन्नेव क्षणे, विहाय स्वपुत्रं स्वान्तःपुरे मूर्तिवदासीनमेकाकिनी त्वरितगतिः नृपसन्निधावनाहूतैवाऽऽगत्य, कोशलदेवीं—अपृष्ट्वैव कारणपरम्परां तादृशस्याऽऽकस्मिकस्य कठोरस्यादेशस्य-तैस्तैर्दुरभिसन्धिभिः कुकल्पनामात्रसम्भवैर्दूषयामास। मगधराजमादेशपरिवर्तनार्थं तैस्तैरनुरोधवचनैः प्रार्थयामास। रुरोद च चिरं···श्रृण्वतामेव स्तब्धानां सर्वेषां परिजनानां तत्तद्द्वारकपाटान्तर्हितानाम्।

मगधराजस्तु कनिष्ठभार्याया लिच्छवीराजकन्याया आतुरं कातरं स्वभावं स्वपुत्रविषयकमगाधं प्रेम चाऽऽदित एव सुष्ठु जानन्नपि तस्याः संशयपरं चित्तं महत्वाकाङ्क्षि मानसं च प्रथमत एव साक्षात्कुर्वन्, चकितः, कल्याणमजातशत्रोः सर्वथा चिन्तयन्त्या उदारहृदयाया महाराज्ञ्या विषये तस्या गूढं विद्वेषं प्रथमत एवानुभवन्, खिन्नो, 'युवराजस्योद्दंडता यथेच्छाचारिता चास्या अत्यधिकस्य मातृस्नेहस्यैव दुष्परिणामः। अतस्तस्य कल्याणसम्पिपादयिषया इतो दूरे सम्प्रेषणमत्यावश्यकमेव' इति दृढतरं निश्चित्य—न तस्या अनुरोधवचांसि मनसि चक्रे।

अनेन च समयेन परिणता सा दीर्घा निशा। मगधराजलक्ष्म्या भाग्योदयमिवाऽऽसन्नं दिनकरोदयं सूचयन्त्यारुणी प्रभा ऐन्द्र्यां दिशि प्रससार। प्रशंसन्त इव मगधराजनिश्चयमुच्चैः संलेपुः प्रबुद्धाः द्विजगणाः। समाश्वस्तायाः क्षात्रशक्तेः सुखनिःश्वास इव मन्दं मन्दं ववौ शीतलः प्राभातिकः समीरणः।

प्रातिष्ठत च रथेनाऽऽर्यजीवको गृहीत्वाऽजातशत्रुं पितुः ज्येष्ठमातुश्च चरणयोः किञ्चिदानतं, जनन्या 'सततरुदितोच्छूनारक्तनयनकमलया' वक्षसि चिरं धृत्वा मस्तकेऽवघ्रातमुन्नतमस्तकं सदर्पं सिंहशावकमिवावशंवदं···तक्षशिलामुद्दिश्य।

CC-0 Pulwama Collection. Digitzed by eGangotri

## तृतीयः परिच्छेदः

'अद्य द्वादशवर्षाण्यतीतानि कुणीकस्य तक्षशिलां गतस्य।…एतादृश्येवाऽऽसीत् सा निशा।…अयमेव स कक्षो यत्रास्माभिरनिच्छद्भिरपि प्रयोजनगौरवान्नियम्य स्वात्मानं दृढीकृत्य हृदयं तव…प्रिये वैशालि।…सास्राः प्रार्थना अवधीरिताः। आक्रन्दत् तव मातृहृदयमुपेक्षितम्। प्रेषितश्च कुणीकोऽतिदूरे तस्मिन् विद्यापीठे।…द्वादश वर्षाण्यतीतान्येतानि द्वादशदिनानीव।…महाराज्ञि! कियता वेगेन नूनं परिभ्रमति कालनेमिः' प्राह मगधराजो बिम्बसारस्तस्मिन्नेव सौवर्णदीपदण्डप्रकाशोज्ज्वले महार्हाऽऽस्तरणसञ्छादितभूतले मन्दसमीरदोलायमानयवनिकातिरोहितवातायने सर्वतःप्रसरद्धूपलहरीसुवासिते महाराज्ञ्या अन्तःपुरे तस्मिन्नेव कक्षे सुखमुपविष्टः स्वसमीप आसीनां सौभाग्यतिलकभूषित-रेखाङ्कितललाटां महार्हधवलकौशेयवस्त्राऽऽवृतकृशतरदेहलतां रत्नखचितसौवर्णमगङ्लसूत्रालङ्कृततनुशिरोधरां धवलकांतिमणिभूषितनासापुटां वृद्धावस्थायामपि पूर्ववदेवाप्रत्याख्येयविशेषां शान्ततरमुखमुद्रां महाराज्ञीं कोशलदेवीं पूर्ववदेव वीजनादिभिः परिचरन्तीं,…राज्ञीं वैशालीं च स्थूलतरदेहवल्लीमपि पूर्ववदेव कमनीयाऽऽकृतिं, प्रौढावस्थायां कृतप्रवेशामपि किञ्चिदप्यन्यूनीभूतरामणीयकां, वातायनसमीपे स्थित्वा प्रज्वलद्दीपदण्डप्रकाश्यमानकपाटद्वयं प्रासादमहाद्वारमेव पुनः पुनरवलोकयन्तीमधीराभ्यां सोल्लासाभ्यां सहासाभ्यां लोचनाभ्यामात्मनैव साकं किमपि किमपि विचारयन्तीं विमनस्कतयैव महाराजस्य सम्बोधनं शृण्वतीम्।

'वेगेन नूनं परिभ्रमति कालनेमिः। अवशंवदा कस्याऽपि। द्वादश वर्षाण्यतीतान्येतानि द्वादशदिनानीव। परन्तु—जानन्ति किमार्यपुत्राः कियत् परिवर्तनमेभिरापादितम्?' अपृच्छन्महाराज्ञी स्नपयन्तीव प्राणप्रियं भर्तारं प्रेमार्द्रया दृष्ट्या…परामृशन्ती च स्वीयं धवलप्रायं केशपाशं करतलेन सस्मितम्।

'जानीमः।…जानीमः। महत् खलु परिवर्तनमेभिरापादितम्'—आह सस्मितं मगधराजः स स्नेहं क्रीडन्निव नयनाभ्यां वार्धकक्लान्ताभ्यामपि प्रसन्नाभ्यां तस्या केशपाशेन सह।

CC-0 Pulwama Collection. Digitzed by eGangotri

'परन्त्वेतत् परिवर्तनं···न खल्वस्माकं देह एव । न खलु खेदकारकमेव । बहिरपि तत् । सुखदमपि तत् ।···अस्मिन् कालावधौ राज्यमस्माकं पर्याप्तां वृद्धिमापत् । ब्रह्मदत्ताद्विजितोऽङ्गदेशः सुव्यवस्थितं प्रशासनं लम्भितः । बलवानवन्तीनरेशो महासेनश्चण्डप्रद्योत उग्रस्वभावत्वेन सुप्रसिद्धोऽपि, स्नेहेन वशीकृतस्तस्य पित्तातिसारमुक्तयेऽस्माकं धन्वन्तरिमार्यं जीवकं स्वयमेव सम्प्रेष्य । ···नात्युत्सुकैरपि···(सहासम्)···एतस्याः सुलभकोपाया वैमनस्याद्बिभ्यद्भिरप्यर्थनीतिवशात् मद्रनरेशस्य तनया, क्षेमाऽपि, परिणीता । (सहासं) वार्धकेऽपि पौरुषममोघं पूर्ववदेव प्रयुञ्जानैस्तनयद्वयेन सम्भाविता च ।···कियान् खलु हर्षः स्याद्बालस्य हल्लस्य वेहल्लस्य चाऽद्य दूरदेशादागतं ज्येष्ठं स्वभ्रातरमदृष्टपूर्वं दृष्ट्वा विस्मयविस्फारिताभ्यां नयनाभ्याम् ।'

'एभिर्वर्षैः कुणीकेऽपि महत् परिवर्तनमापादितं स्यात् । यदा खलु स इतो विद्यापीठेऽध्ययनार्थं प्रेषितस्तदैव किशोरोऽपि-(सकौतुकम्-) आजानुबाहुः कपाटवक्षा···महाप्रमाणतया शरीरस्य विकसितपूर्णतारुण्य इवाऽऽसीत् । अस्मिनवधौ तु नूनं स महाबल एव सञ्जातः स्यात् ।···कथं त्वं मन्यसे, वैशालि ?'—अपृच्छन्मगधराजः ।

वैशाली तु स्वपुत्रनामश्रवणक्षण एव दत्तावधाना, सकौतुकं शृण्वती मगधराजस्याऽऽलापं, राजप्रासादप्रवेशमहाद्वारादीषद् व्यावृत्तलोचना स्मितेनैवास्फुटेन प्रत्युत्तरं ददौ ।

'आशास्महे एभिर्वर्षैस्तस्य स्वभावेऽपि महत् परिवर्तनमापादितं स्यात् । आशास्महे—तक्षशिलाविद्यापीठे बृहस्पतिकल्पानां तपोमूर्तिनां न्यायनिष्ठुराणां निःस्वार्थानामाचार्याणां सन्निधौ निरन्तरं निवसतः, सामान्यविद्यार्थिवत् जीवनं नियमबद्धं यापयतश्चेतोदूषकाणां कर्णदंशकानां स्तुतिमुखराणां प्रवञ्चनपटूनां स्वार्थान्धानामन्तःपुरजनानामितरेषां च ।मत्रब्रुवाणां दुष्प्रभावात् परिरक्षितस्य तस्योद्दण्डत्वमधीरत्वं च विलीनकल्पं सञ्जातं स्यात् ।'

'आशास्महे एवम् । न तु विश्वसिमः'-सखेदं प्राह बिम्बसारः निबध्य विचारमग्नां दृष्टिं चिन्ताजडां निवातस्थिरे प्रदीपज्योतिषि । 'अस्मिन् कालावधौ संदेशवाहकैराहृता विद्यापीठकुलपतिसन्देशा हि पौनःपुन्येनासूसुचन् यत् कुणीकस्य तासु तासु ललितकलासु तेषु तेषु साहित्यादिविषयेषु तथाऽऽन्वीक्षिकीत्रयीवार्त्ताक्षेत्रेषु प्रगतिः निःसंशयं विलक्षणैवाऽऽसीत्, असामान्याऽर्थशास्त्रे तस्य रुचिः, युद्धकलायां कल्पनाचतुरा तस्य प्रतिभा, नित्यनूतनतथ्यग्रहणशक्तिश्च । कुशाग्रां सर्वंकषां मर्मस्पर्शिनीं नैसर्गिकीं तस्य बुद्धिं साक्षात्कृत्य तेषु तेषु प्रसङ्गेषु तस्या-

CC-0 Pulwama Collection. Digitzed by eGangotri

ऽऽचार्या अपि स्वयं विस्मयमवापुः । निरलसस्य तस्य द्व एव व्यसने तत्राऽऽचार्यैः परिलक्षिते-ऽध्ययनं व्यायामश्च ।'

'आविष्ट इव केनाऽपि ग्रहेण, गृहीत इव केनाऽपि यक्षेण, परवश इव कस्यापि निर्धूमन्तर्ज्वलतो महतः संकल्पस्य, दास इव कस्या अपि तन्मात्रविदिताया महत्त्वाकाङ्क्षाया, अशान्तचित्त इवास्वस्थहृदय इव, स्वं समयं सदाऽध्ययने व्यायाम एकान्तविचरणे वा प्रायुङ्क्त ।

न कदापि सामान्यविद्यार्थिवत् तं मनोविनोदने संलापे परिहासे वाऽयापयत् । नहि स कदापि हसन् वा समुपहसन् वाऽन्यं सतीर्थ्यमुपलक्ष्य केनाप्यलक्षि ।'

'विद्यापीठसमीपवर्तिषु प्रदेशेषु निरुद्देश्यं भ्रमन् वा···समुच्छलत्तारुण्यास्वपि निर्भीकास्वपि ग्रामीणबालासु व्यापारयन् यौवनोत्सुकोत्सुके नयने स्वे ।'

'तस्यैतस्य लोकविलक्षणस्वभावस्य कारणाद्वा तस्य नैसर्गिकस्य वैयक्तिकविशेषस्यानिर्वर्णनीयस्य कारणाद्वा-तस्याऽऽचार्या नैव निर्णेतुमपारयन् कदापि, स सामान्यविद्यार्थिजनेन दूर एव सदाऽवस्थापितः । न कदापि स्वसमानश्चिन्तितः । यौवनस्वभावमनुसृत्यानध्यायकालेऽनुपस्थितेषु वा गुरुजनेषु हसन्तो विहसन्त उपहसन्तः परिहसन्तो वा तस्य सहाध्यायिनो यदृच्छयाऽपि तदाऽऽगतं तं वीक्ष्य तस्मिन्नेव क्षणे कृतपरिलक्षितापराधा इव दण्डभयाक्रान्ता इव मूकाः स्तब्धा बभूवुः सोऽपि वीक्ष्यैतन्नैकदाऽपि दुर्मने । प्रत्युतलब्ध प्रत्यय इवाऽऽक्रामकस्य स्वप्रभावस्य सन्तुष्ट इव बभूव । ···एकदा द्वित्रैः कपिस्वभावैरकुतोभयैर्विद्यार्थिभिस्तस्याहम्मन्यतामेतां विचूर्णयितुं सम्बोधितोऽपशब्दैः परिहासलघुभिस्तथा प्रतिचक्रेऽनुत्तेजित एव दारुणेन ताडनेन निःशब्देन यथा त उद्दण्डमग्या···अन्ये च तदनुयायिनोऽभुग्नानि स्वाङ्गानि बहु मानयन्तः··· न कदापि पुनस्तमुपहसितुं दधृषुः तं सर्वदा दूरत एवावर्जयन्' ।

'आत्यन्तिकै कान्तप्रियतयाऽनया कूणीकस्य स्वभावत्रुटयो वृद्धिमेव क्रमशो यान्त्य आचार्यैः परिलक्षिता'—आह सखेदं सः ।

राज्ञी चेल्लना त्वेतावत्कालपर्यन्त वातायनसंस्थिताऽपि प्रासादमहाद्वारसम्पृक्तनयनाऽपि पत्युर्भाषणे दत्तावधाना, क्षीयमाणस्मितप्रभा, शनैः शनैरारज्यमानमुखमुद्रा, ततः परमसमर्था तच्छ्रोतुं मूकभावेन, मिषेण केनापि ततः सवेग निरगच्छत् ।

'अनवरतं वर्द्धमानेन तस्य बुद्धिसामर्थ्येन ज्ञानभाण्डारेण शारीरेण च बलेनोपोद्बलिता इव, उपकृता इव, प्राणिमात्राधिक्षेपकारिण्यहंमन्यता प्रतीकारलवमप्यसहमाना स्वेच्छाकारिताप्रवृत्तिर्योग्यायोग्यसाधनविवेकासहिष्णुर्वर्धि-

CC-0 Pulwama Collection. Digitzed by eGangotri

ष्णुता च वृद्धिं यान्त्य एवाचार्यैविस्मयखिन्नः निरीक्षिता'—अब्रवीन्मगधराजो विमनस्कोऽविदमेव कुणीकमातुस्ततः प्रयाणम् ।

'मगधराजधानीमुद्दिश्य कुणीकस्य विद्यापीठात् प्रस्थानं संसूचयति कुलपतेरन्तिमे पत्रे तु तेन 'भार इवावसितः स्वहृदयस्य' इति स्पष्टं ध्वनितम् । 'मगधराजपुत्रस्य केनापि सतीर्थ्यनाऽऽचार्येणैव वा सहाऽऽत्यन्तिकः सङ्घर्षस्तु न स्याद्' इत्याशंकया नूनं तस्य वृद्धस्य हृदयं सदाऽभिभूतमेवाऽऽसीत्'-आह स, विदन् देव्याश्चेल्लनाया अनुपस्थितिम् ।

'महाराज्ञि ! आवाभ्यां कुणीको विद्यापीठे सुदूरे विद्याध्ययनार्थं स्वाभाविक दोषशमनार्थं च प्रेषित आसीत् । अर्द्धमेवाऽऽवयोरुद्दिष्टस्य सिद्धमिव लक्ष्यते । तत् कथं मन्यसे ?···राजनीतिनिपुणाय शस्त्रकलाकोविदायार्थशास्त्रपारंगताय बलसम्पन्नाय परन्तु प्रचण्डक्रोधायाधीरस्वभावाय स्वेच्छाकारिणेऽजातशत्रवे यौवराज्येऽभिषिक्ताय सविधि यथासमयं प्रदत्तं मगधराज्यं क्षेमवत् स्यात् ?···अथवा-तं कस्यचित् प्रान्ताधिपस्याधिकारपदे संस्थाप्य कथमपि कालमतिवाहयद्भिः हल्लस्य यौवनपदार्पणपर्यन्तं प्रतीक्षा कार्या ?'

'ग्रस्ता इवाऽऽर्यपुत्रास्तया भविष्यद्गिरा सदा वत्सस्याजातशत्रोर्विषये प्रतिकूलमेवाऽऽशंकन्ते'-प्रत्युवाच कृतककोपा कोशलदेवी सस्नेहं भर्त्सयन्ती प्राणप्रियं पतिमातेवाऽऽशङ्कातुरं तनयम् । 'यौवराज्येऽभिषिक्तो वंशपरम्परानुसारं मगधराज्यस्य लाभे सञ्जातविश्वासः प्रायोगिकज्ञानलाभार्थमनुरूपे कस्मिंश्चिच्छासकपद आर्यपुत्रैर्नियुक्तो वत्सः स्वसामर्थ्यानुरूपं कर्तव्यभारं लब्ध्वा शनैः शनैर्धीरस्वभावो योग्यायोग्यविवेकसमर्थः संयमशीलश्च स्यादित्यत्र मे नास्ति स्वल्पतमोऽपि सन्देहः ।

'लोकविलक्षणं महत्तमं कार्यं सम्पादयितुं नियत्या सर्वतन्त्रस्वतन्त्रया समये समये संसारे सम्प्रेषिताः लोकविलक्षणसामर्थ्यसम्पन्ना मानवाः स्वसामर्थ्यानुरूपकार्यलाभपर्यन्तमेवमेव वर्तन्ते दुर्मनायमाना इव । अस्माकं वत्सोऽजातशत्रुः—' ।

'आगतः । आगतः ।' अविरतवचस्येव तस्यामकस्मादश्रूयत प्रहृष्टानां समुत्तजितानां चाऽन्तःपुरपरिचारिकाणां प्रधानप्रवेशद्वारमुद्दिश्य ससम्भ्रमं परित्यज्याऽन्यत् कार्यं धावन्तीनां महान् कोलाहलः ।

विरम्य संलापात् सौत्सुक्यं श्रृण्वतोरेव च तयोः समक्षमुपतस्थौ नातिचिरादेव महाप्रमाणकायः पूर्णविकसितयौवनः श्यामतरवर्णः प्रभविष्णुमूर्तिः नातिमांसलशरीरः श्मश्रुलमुख आरक्तनयनोदग्रः रेखाङ्किकतविस्तीर्णललाटफलकः समुद्धतगतिः नमयन्निव प्रतिपदक्षेपं सर्वंसहामुन्नमितमस्तकः श्यामलभङ्गुरकेश-

CC-0 Pulwama Collection. Digitzed by eGangotri

चुम्बितवृषस्कन्ध आजानुबाहुर्महाद्वारकपाटवक्षा:,—पूर्णावतार इव क्षात्रप्रभावस्य कृतविग्रहपरिग्रह इव शस्त्रास्त्र सारो मूर्तिमानिव पराधिक्षेप:,—सिंहकटितटविलसद्खड्गो, गभीरमहासागर इव दु:खगाहान्तस्तल:, पर्वतराज इवानुल्लङ्घनीयमहिमा, मणिराज इव कठिनवपुर्वनराज इव जन्मसिद्धाऽधिपत्य: सहस्रकिरण इव दुष्प्रसहमूर्तिरजातशत्रु: पुरत: ससम्भ्रमं प्रधावताऽन्त:पुरिकाजनेन प्रदर्श्यमानमार्ग, उल्लासातिरेकप्रस्खलच्चरणया परलोकादिव पुनरागतं चिराकांक्षितपुनर्दर्शनं स्वतनयं पुन: पुन: पिबन्त्या हर्षाश्रुभरिताभ्यां विस्मयविस्फारिताभ्यां नेत्रचषकाभ्यां हर्षातिरेकमूकया जनन्या सह ।

उपस्थितश्च, तस्मिन्नेव कक्षे तस्मिन्नेव समये महाराज्ञ्या सह तथैव समुपविष्टं धवलतरकेशं दुर्बलतरकायं रेखाङ्कितमुखमुद्रं स्वपितरमवलोक्य क्षणमात्रं स्मरन् तस्याश्चिरस्मरणीयाया: प्रतिक्षणं स्मृताया: निशाया:, स्मरन् तस्य कठोरस्य निष्कासनाऽऽदेशस्य, कठोरतरमुद्र आरक्ततरनयन उन्नततरमस्तक उच्छूननाडीभीषणविस्तीर्णभालप्रदेशो द्वितीय एव क्षणे नियमितस्वान्त: पूर्ववच्छान्त:, सृत्वाऽग्रेजनन्या: स्फुटितास्फुटवाण्या कृतककोपं प्रेर्यमाण:, पितरं निर्निमेषस्थिरया दृष्ट्या तमेवावलोकयन्तं निर्निमेषस्थिरया दृष्ट्याऽवलोकयन्, घर्घराक्षरं नामग्राहं प्रणनाम ।

ज्येष्ठं पुत्रं चिरात् खल्ववलोक्य समुपजातेनाऽऽवेगेन प्रकम्पमानाभ्यां वार्धककृशाभ्यामपि सबलाभ्यां बाहुभ्यामाकृष्य सुगन्धितचिकुरे मस्तके चिरमवघ्राय विमुक्तो जनकेन सास्त्रेण, ज्येष्ठां जननीं कौतुकविस्फारिताभ्यामक्षिभ्यां सकुशलं प्रत्यागतस्य नीराजनामिव कुर्वतीं महाराज्ञीं कोशलदेवीं चाऽऽनमत् ।

'यथाऽस्माभिरुत्प्रेक्षितमासीद्वैशालि तथैवाऽयं कुणीको महाप्रमाणो बलिष्ठश्च सञ्जातोऽस्ति'—प्राह मगधराज: स्वसमीप एवोपवेशितस्य तनयस्य सस्नेहं परामृशन् वृषस्कन्धप्रदेशम् । 'अयमस्य श्यामलतरो वर्णोऽनतिमांसलो देहो विस्तीर्णो वक्ष:प्रदेश: सामर्थ्यमात्रनिर्मित इव लोहमय इव काय:-नूनं व्यञ्जयन्त्येतेऽस्य कठोरं शास्त्रास्त्र विद्याभ्यासं संयमितं च जीवनं तक्षशिलायाम् । न खल्वेतानि सम्भवन्ति विलासपङ्कमग्नस्य सुखलोलुपस्य क्षत्रियब्रुवस्य '।

'उत्सुकायतेऽस्माकं चेतो वत्सस्यार्थशास्त्रनैपुण्यं प्रशासनचातुर्यं च, विद्यापीठेऽधिगतं गुरुभिश्च बहुमानितं तेषु तेषु सन्देशेषु, परीक्षितुं प्रात्यक्षिके क्षेत्रे' !

'तन्मन्यामहे, महाराज्ञि !, अचिरादेव वत्सं यौवराज्येऽभिषिच्य प्रशासनकार्ये च विनियुज्यास्माभिरब्दशतार्द्धेनोढा राज्यशासनस्येयं धुरा क्रमशो वत्से सङ्क्रमणीया, सद्गतिश्च साधनीया कृतकृत्यै: प्रशान्तचित्तैर्वानप्रस्थामिमांप्रविष्टै: ।

CC-0 Pulwama Collection. Digitzed by eGangotri

'गार्हस्थ्याश्रमस्य धुरायामपि, वैशालि, अचिरादेव वत्सो विनियोक्तव्यः। (सस्मितं) नूनं त्वया वत्सस्यानुरूपा कुलशीलविभवैर्बालिका काचिन्निभृतमवलोकितैव स्यात्। जनन्यो ह्यस्मिन् कार्ये प्रकृतिदक्षाः निसर्गनिपुणाश्च।...तत् कयत्कालपर्यन्तं गोप्यं तत् स्वात्ममात्रज्ञातं रक्षिष्यसि ?... वयमपि तु तद्ज्ञातुमुत्सुकाः।

इत्थं स्नेहावेगवशात् किमपि किमपि जल्पन् वृद्धो बिम्बसारश्चिरमासांचक्रेस्वतनयमुखकमलभृङ्गायमाणनेत्रया देव्या वैशाल्याऽर्द्धमनस्कं, स्वभर्तुः निराशंकं हृदयमनुभूय समाहितचित्तया कोशलदेव्या सस्नेहं, चिरस्य खल्वननुभूतं पितृस्नेहावेगमनुभूय किञ्चिच्चकितेनाजातशत्रुणा निःशब्दं श्रूयमाणः।

CC-0 Pulwama Collection. Digitzed by eGangotri

## चतुर्थः परिच्छेदः

'अधीत्य विधिवद्विद्यास्तक्षशिलाविद्यापीठात् सद्य एव प्रत्यागतः रण-कोविदो महाबलोऽजातशत्रुः नातिदूरवर्तिन्यां वसन्तपञ्चम्याः शुभपुण्यतिथौ मगधराजेन बिम्बसारेण यौवराज्येऽभिषेक्ष्यत'-इत्यचिरादेव सर्वत्र प्रससार मलयानिललहरीव सर्वजनाभिवन्दनीया पिकस्वरततिरिव सर्वश्रुतिसुखदाऽऽम्रम-ञ्जरीव भाविसमृद्धिसूचिका वार्त्ता, यां राजकीयैरुद्घोषकैर्ग्रामटिकासु ग्रामेषु नगरेषु महानगरे राजगृहे च सडिंडिमनिनादमुद्घुष्यमाणां निपीयोत्सुकोत्सु-काभ्यां कर्णाभ्यां सर्वे मागधा बालास्तथा वृद्धाः निर्धनास्तथा सधनाः पांसुल-पादास्तथाऽभिजाताः पुरुषास्तथा महिलाः निर्बलास्तथा सबला हर्षातिरेकेण ननृतुः, यया च विशेषराजदूतनीतया लिच्छवीगणतन्त्रसदस्याः निर्धना अपि स्वात्मसम्मानिनः स्वराज्यकन्यातनयं मगधसिंहासनासीनकल्पं परिकलय्याऽऽत्मानं विशेषगौरवाऽन्वितमनुबभूवुः ।

यथा यथा च संकल्पिता तिथिर्यौवराज्याभिषेकस्य नैकट्यमभजत तथा तथामागधानामुत्साहाम्बुधिर्विविधराजकीयसुखप्रदघोषणासमीरोद्वेल्लितो वृद्धि मभजत । तेषां कौतुकसागरश्च महोत्सवार्थमेवाऽऽगतान् राजगृहमहाप्राकारबहि-र्वर्तिनि विस्तृते प्रदेशे कल्पितेषु पटगृहेषु विविधवर्णेषु विभिन्नवृत्तान्तेषु क्लृप्त-निवासान् विचित्रपार्वतीयवेषधारिणः लिच्छवीगणराज्यप्रतिनिधिगणान्, महा-प्रमाणान् बलिष्ठान् गौरवर्णान् सरलनासान् माद्रान् राजपुरुषान्, मृदुसरल-स्वभावान् कोमलप्रकृतीन् रसिकानावन्तिकान् सामन्तान्, स्वाभिमानिनः रण कलाकुशलाननुभवविदग्धान् कौशलान् अधिकारिणः श्वेतवर्णान् पिङ्गलकेशान् मार्जारनयनान् बलिष्ठानुत्तुङ्गान् गान्धारान् राजपुरुषान्, विशेषसम्मानार्हान् गर्विष्ठान् वात्सांश्च राजगृहस्याऽऽपणपंथेषु प्रधानचत्वरेषु प्रमुखाऽऽरामेषु प्रसिद्ध-देवतायतनेषु च सर्वत्र यथेच्छं स्वैरं परिभ्रमतोऽवलोकयताम् ।

एवं समुल्लासपयोनिधिमज्जनं यथेच्छमनुभवतां मागधानां प्रजाजनानां, भावियौवराज्याभिषेककार्यसम्पादनव्यग्राणां त्वरमाणहृदयानां मागधानां राज-पुरुषाणामुच्चावचानां उत्साहमूर्तेः लुप्तप्रायवार्धकवैक्लव्यस्य निराशङ्कस्य मगधराजस्य बिम्बसारस्य, नैपुण्येन महता सर्वा व्यवस्थाः सम्पादयन्त्याः प्रसन्न-

CC-0 Pulwama Collection. Digitzed by eGangotri

चित्ताया निराकुलाया महाराज्ञ्याः कोशलदेव्याः, प्रहृष्टमानसाया महाराज्ञ्याः साहाय्यं कर्तुमिच्छन्त्या अपि स्वतनयमभित एवाहोरात्रं तत्तत्कार्यमिषेण परिभ्रमन्त्याः राज्ञ्याश्चेल्लनाया, बालिशोत्साहातिरेकेण प्रतिक्षणमुल्लङ्घ्य मातृशासनं यथेच्छं परिभ्रमतोर्बालयोः हल्लवेहल्लयोः संयमन एव सर्वथोपयुज्यमानसामर्थ्याया माद्रयाः, प्रसन्ननिःस्तब्धेन मूकभावेनाऽऽयोजनं सर्वं पश्यतः सन्तुष्यमाणाहंभावस्यैकान्तप्रियस्य मगधराजपुत्रस्याजातशत्रोश्चाविदिता एव ते दिवसा आन्तराला अयांचक्रिरे।

प्रादुरासीच्च मागधैः सोल्लासं लैच्छवैः साकाङ्क्षं माद्रैश्च सकौतुकं प्रतीक्षितः स दिवसः।

अलंचकारोदयाद्रिशिखरं भगवान् सहस्रांशुर्मागधराज्यलक्ष्म्यभ्युदयाभिनन्दनार्थं त्वरमाणहृदय इव, कृतवसन्तपूज इवाऽऽरक्तकरः। भूषयामासुरुद्यदरुणसारथिकिरणारक्तवर्णा वासन्तिकमहोत्सवनिमित्तं माञ्जिष्ठरागरक्ता इवाभ्रंकषदेवतायतनशिखरपताकाः नीलनिरभ्रनभस्तलं, मन्दसमीरदोलायमाना आह्वयन्त्य इव सर्वान् दिक्पालकान् मगधराजपुत्रशोभायात्राऽवलोकनार्थम्।

अरुवन् सद्यः प्रबुद्धा सोल्लासं यथेच्छं डयमाना वियदङ्गणे···चेतयन्त इव परस्परं नातिदूरगमनार्थं···पतत्रिणः।

आरेभिरे च कथमपि परिसमापितकृत्याः सम्पादितकुसुमायुधपूजाः कौसुम्भरागरञ्जितवेषालङ्कृताः सोल्लासा उच्चैर्विहसन्तो नागरिका ग्रामीणा अभ्यागताश्च जनाः निर्धारितपूर्वविविधकुसुमतोरणाऽलङ्कृतेऽनेकाभिनन्दनद्वारभूषिते परिमार्जिते सद्यः सिक्ते निर्धूलिकणे शोभायात्रामार्गे समापतितुं, नार्यश्च महार्हवस्त्रविशेषाऽऽवृतदेहलता आम्रमञ्जरीविभूषितकर्णपाशा विविधाऽऽभूषणभूषिता अंगरागसुवासिततनुवल्लर्यः कृतविविधकेशरचनारमणीया मञ्जुलं परिहसन्त्यः अंशावतारा इव मागधराज्यलक्ष्म्या भाविपत्यवलोकनार्थं समुत्सुकायमानचित्तायाः— शोभायात्रामार्गोभयपार्श्ववर्तिनामभ्रङ्कषशिखराणां नागरिकवरेण्यनिवासानामसंख्यानि वातायनान्यलङ्कर्तुं-येन नरशिरोमय इव स मार्गः, प्रफुल्लकमलखचिता इव सा प्रासादततिः, सोल्लासहासध्वनिमयमिवाम्बर तलं, सुगन्धभारमन्दगतिरिव सदागतिरचिरादेव बभूव।

उदगाच्च सहसा राजप्रासादशिखरात् तीव्रस्तूर्यध्वनिर्युगपत् प्रहतपटुपटहनिनादानुसृतो यं निशम्य शोभायात्रामार्गोभयपार्श्वाऽऽबद्धपङ्क्तयो वेत्रधरनगररक्षकनियम्यमाना मागधा अभ्यागताश्चोन्नमय्य कन्धराः नार्यश्च वातायनेभ्यो बृहद्भ्यो निर्गमितोत्तमांगाः परिवर्तितमुखारविन्दा मगधराजप्रासादमहाद्वार मेव विरतालापं निर्निमेषमवलोकयितुमारेभिरे।

CC-0 Pulwama Collection. Digitzed by eGangotri

अवलोकयांचक्रिरे च तस्मिन्नेव क्षण लोहकवचाऽऽवृतकायैर्महाप्रमाणै-स्तीक्ष्णभल्लहस्तैरश्वारूढैरङ्गरक्षकैः संसूच्यमानाऽऽगमनं, शुभलक्षणां प्रस्रवन्-मदां विचित्रवर्णमहार्हकंबलाच्छादितकलेवरां विविधवर्णभूतिभूषितभालप्रदेशां सुवर्णालङ्कारालङ्कृतशुण्डादण्डां शब्दायमानसौवर्णघण्टिकां कुशलहस्तिपक-नियम्यमानां हस्तिनीमारुह्य प्रस्थितं, शुभ्रमहार्हक्षात्रवेषधारिणा सौवर्णमुकुट मण्डितमस्तकेन प्रसन्नेन मगधराजेन बिम्बसारेण सहितं, महार्हधवलक्षात्रवेषं रत्नखचित धवलोष्णीषविभूषितमस्तकं, सद्यःकृतसाक्षतकुंकुमतिलकालङ्कृतभाल-प्रदेशं, विलसन्मौक्तिकमालाविभूषितविशालवक्षःस्थलं, पार्श्वावस्थितकौसुम्भ-रागरञ्जितवेषाभ्यां चामरिकाभ्यां मन्दं मन्दमभिवीज्यमानमुन्नतमस्तकं, प्रसन्नो द्धतलोचनं, सगर्वस्मितं राजपुत्रमजातशत्रुं,...आरुह्यान्यं महाप्रमाणं सुशोभित-तनुं किञ्चिन्न्यूनविशेषं गजविशेषं महाराजमनुगच्छतः कौशेयवस्त्राऽऽवृततनुल तान् रत्नखचितसौवर्णालङ्कारालङ्कृतान् प्रसन्नमुखकमलान् मगधराजदारान्... तदनु चाऽऽरुह्य स्वं स्वं रथं प्रचलतो विविधभूषणभूषितान्सभार्यान् वत्स-कोशललिच्छवीमद्रगांधारादिदेशनरेशान्,... अन्ते चोपविश्य स्वस्वशिबिकासु मानमर्यादानुरूपवृत्तान्तासु प्रचलत उच्चावचान् प्रमुखराजपुरुषान् ।

स्फोटयांचक्रिरे चावलोकनक्षण एव गगनतलं तुमुलैर्जयनिर्घोषैः ।

मगधराजकुमारोऽजातशत्रुस्तु प्रासादाट्टालिकाततिसंततनिपतत्कुसुम-वर्षाऽऽच्छादितेन राजमार्गेण शनैः शनैरग्र सरन्, स्वीकुर्वन् प्रणामाञ्जलीः सर्वेषां, यथासमयं प्राप प्रमुखतमदेवतायतनप्राङ्गणनिर्मितमति विस्तृतमसङ्ख्य कुसुमतोरणमालाविभूषितं जलपूर्णमङ्गलकलशभूषितप्रवेशद्वारं देशविदेशा गतसुखासीनराजदूतशोभितं मङ्गलवाद्यश्रुतिसुखदध्वनिलहरीनिनादितं यौव-राज्यायाभिषेकक्रियासाधनसामग्रीसहितं पटमण्डपम् ।

प्रविश्य च तं कृतगुरुजनपादवन्दनः, रजतदण्डधारिप्रतिहारिभिः प्रदर्शित मार्गः राजकुलपुरोहितैर्भूतलबृहस्पतिभिर्विशिष्ट आसने समुपावेशित, आर्यावर्तस्य प्रख्यातेभ्यो विद्यापीठेभ्यः पावनेभ्यस्तीर्थभ्य आगतैर्विद्यापारङ्गतैः निष्कलङ्का-चारैरंशावतारैरिव ब्राह्मतेजसो धृतविग्रहस्याभिनन्दनार्थं क्षात्रतेजसः पूर्णोदयस्य भूदेवैः समंत्रोद्घोषं यथाविध्यभिषिक्तो मगधयौवराज्यं लेभे ।

उदगाच्च तस्मिन्नेव क्षणे-ख्यापयन्निमां मङ्गलां वार्त्तां, समाश्वासयन् भाग्योत्कर्षातुरहृदयां मगधराज्यलक्ष्मीमुट्टङ्कयन् कालपट्टेऽनादिन्यनन्ते मङ्गलामिमां घटनां, महांस्तूर्यध्वनिः...निशम्य यं द्विगुणितहर्षा मागधा विधूत-सर्वनियंत्रणा, उपेक्षितस्वपरभावं परस्परमालिंगन्त, उच्चैर्विहसन्तः, स्वच्छन्द मालपन्तोऽभिषेकमण्डपसंनिधौ, बहिः, राजमार्गे, रथ्यासु, चत्वरेषु, प्रासादे

CC-0 Pulwama Collection. Digitzed by eGangotri

निवासांगणेषूद्यानेषु, सवत्रैव-विमुक्तभावं ननृतुः।

एवंप्रायेणोल्लासातिरेकेण सञ्जातभार इव स चिरस्मरणीयो दिवस शनैः शनैः परिणतिं ययौ। मागधहर्षविलासावलोकनकृतार्थ इव भगवान् सहस्रकरो विश्रामार्थं किलाऽस्ताचलशिखरमयात्। अनिच्छन्त्या अपि पातिव्रत्यमर्यादामनुसृत्येव तमनुगच्छन्त्या अलक्तकरागरञ्जितचरणकमलाया दिनश्रियः पदचिह्नाङ्कितमिव पश्चिमाशाप्राङ्गणमारक्तं बभूव। जनसंमर्दसंघट्टसञ्जातोष्मा इवोष्णः प्रफुल्लोन्मादकाम्रमञ्जरीगन्धवाही गन्धवाहो मन्दं मन्दमवहत्। शनैः शनैः कर्णोपकर्णिकया श्रुतं यौवराज्याभिषेकदीपोत्सवाऽऽयोजनं साक्षात्कर्तुं समुत्सुकेव निशा गगनाङ्गणे प्रादुर्बभूव। स्वीयैरसंख्यैस्तेजस्विभिः नक्षत्रनयनैर्मागधजनकौतुकानि चाऽवलोकयितुं प्रचक्रमे। प्रोत्साहिता इव चाऽनेन मागधा उच्चावचाः स्वस्वनिवासान् मन्दवातप्रकम्प्यमानप्रदीपशिखाभिरसंख्याभिर्दीपमालाभिः समलङ्कृत्य तत्र तत्र चत्वरेषु नृत्यगीतोत्सवानायोजयितुमारेभिरे।

मगधराजो बिम्बसारस्तु सायंविश्रामकक्षवातायनान्निपीय स्वप्रजाजनानामानंदोत्सवं वार्धकश्रांताभ्यां नयनाभ्यां प्रसन्नो, विचारयन् स्वात्मनैव किमप्यन्ते कृतनिश्चय इव समुत्थाय, वेत्रधारिण्या समुपदिश्यमानमार्गोऽतिक्रम्यानेकान् प्रकोष्ठान् स्वीकुर्वन् सस्मितमुल्लसितानामन्तःपुरिकाणां प्रणामाञ्जलीः, प्राप चेल्लनादेव्या अतिविशालं नयनाभिरामं मृदुलाऽऽस्तरणप्रच्छादितभूतलं मन्दसमीरदोलायमानपुष्पलताशोभितप्राङ्गणारामं, स्वस्य युवराजस्य तन्मातुश्च पुरुषप्रमाणाभिः सद्य आलिखिताभिरप्रतिमाभिः प्रतिमाभिः सुशोभितमन्तःपुरम्।

हंसपक्षतिमृदुले पर्यङ्के सुखमुपविष्टेन, म्लानप्रायामाम्रमञ्जरीं जिघ्रता परिगृहीत पीतदुकूलद्वयेनेषत्परामृष्टयौवराज्याभिषेकमङ्गलतिलकोज्ज्वलभालप्रदेशेन प्रसन्नेन सस्मितेन स्वपुत्रेण सह स्वैरं किमपि किमपि जल्पन्ती चेल्लनादेवी तु, सर्वथाऽनपेक्षितं स्वभर्तुरागमनं ससंभ्रमं प्रधाविताया: प्रधानवेत्रधारिण्याः सकाशाद् विदित्वा क्षणमात्रं विचारमग्नाऽपरस्मिन्नेव क्षणे कृताऽऽकारगूहना, सहर्षमिव ससंभ्रममिव पुरतः सत्वरमागत्य महाराजं सादरमभ्यन्तरमनयत् प्रमुखासने समुपावेशयद्वीजनादिभिश्च परिचरन्ती तदागमनप्रयोजनजिज्ञासाताम्यद्हृदयाऽपि तूष्णीं तस्थौ।

महाराजो बिम्बसारोऽपि सुखं निषण्णः सादरमुत्थितं युवराजमासनग्रहणाय समादिश्य प्रसन्नया कौतुकपूर्णया दृष्ट्या लालयन्निव तस्य प्रौढयौवनरामणीयकं मुहूर्तं तूष्णीमवस्थाय शनैः शनैरवोचत्—

'दिष्ट्या संपन्नो वत्सस्य यौवराज्याभिषेकविधिः। संपन्नोऽस्य बलाढ्यस्य

CC-0 Pulwama Collection. Digitzed by eGangotri

सुविख्यातस्य मगधराज्यस्यानुरूपेण समारोहेण महान् खलु ममाभिलाष आसी-च्चिराद्यदस्यदुर्वहस्य भारस्य धूर्वतस्य बलिष्ठयोः स्कन्धयोः स्थापनीयेति यौवराज्याभिषेकेण सममेव स पूर्णोऽद्य ।'

'युवराजेन नूनं वत्सेनाद्यप्रभृति महान् भारो महती कार्यधुरा महदुत्तर-दायित्वमङ्गीकृतम् ।'

'मागधं हि राज्यं न खलु राज्यान्तरसाधारणम् । विशिष्टमस्य नूनमुत्तर-दायित्वं नियतिनिर्धारितम् । तन्निर्वाहयितुमत्यन्तमसमर्थ आसीत् प्राचीनबार्हद्रथ-वंश्योरिपुञ्जयो मगधराजः । अतएव सः, स्वाम्यपि, सिंहासनाद्बलाद्दूरीकृतस्तस्य प्रबलेन सेनाध्यक्षेणातातेन भट्टीयेन । आत्मानं च सर्वथा समर्थमपि स्वामिद्रोह-कलङ्क कलङ्कितमत एव महत्तमकर्तव्यपूरणायोग्यं मन्यमानेनाऽहं पंचदशवर्षीयो बालोऽपरिपक्व एव मगधराज्यसिंहासने स्थापित उद्बोधनपूर्वकम् । अङ्गीकृतश्च वनवास आत्यन्तिकः स्वयमेव स्वामिद्रोहपातक परिमार्जनं कर्तुं घोरेण तपसा । मगधराज्यस्य तद्विशिष्टं नियतिप्रदत्तमुत्तरदायित्वं समस्तस्य भारतवर्षस्य खण्डितस्यैकातपत्रे शासने प्रबले स्थापनमेकीभूताया दुर्धर्षशक्तेः भारतवर्षस्य नगा-धिराजपारवर्तिनामनार्याणामासुराणां नियमने तथा भारतीयसंस्कृतेर्भारतीयधर्म-स्य च—वैदिकस्य वा बौद्धस्य वा जैनस्य वा,—यथोचिते संरक्षणे प्रोत्साहने च योजनम् ।'

'एतच्चोत्तरदायित्वं यावच्छक्ति पूरयितुं मयाऽर्द्धशताब्दीपर्यन्तमनवरतं प्रयतितम् । बाल एव वयसि सुकुमारयोः स्कन्धयोः निपतिता राज्यप्रशासनधुरा यथाशक्त्यूढा । मगधराज्यस्यान्ऽऽन्तरिकाः रिपव एकैकशो विजिताः । मागधानां परम्परागतः शत्रुरङ्गराजो ब्रह्मदत्तो, येन खलु तातो भट्टीयोऽपि समराङ्गण एकदा पराजित आसीत्, समराङ्गण एव बलाद्विजितः । तस्य चाऽऽत्यन्तिकम-दर्शनं गतस्य राज्यं सम्पूर्णमेव मगधराज्ये समावेशितम् । मया खलु मगधराज्यस्य शक्तिं वर्द्धयितुम् सततं प्रयतमानेन सामोपाय एव प्रामुख्येन प्रायोजि । प्रबलः कोशलदेशाधिपः प्रसेनजित् तस्य प्राणाधिकां भगिनीं पराक्रमी लिच्छवीगण-राज्यप्रमुखश्चेतकस्तस्य प्रियां भगिनीमेतां वैशालीं तव जननीं, निर्भीको मद्रदेश-नरेशस्तस्यदुहितरंक्षमां सर्वविधक्षेमप्रदां च-वैवाहिकसूत्रै राबध्नता स्नेहपाशेना-ऽऽबद्धाः । वत्सदेशाधिपः सुदर्शन उदयनस्तु सुलक्षणां तव ज्येष्ठां भगिनीं पद्मावतीं परिणयन् स्वयमेवास्माकमात्यन्तिकः शुभचिन्तकः पारिवारिकः संपन्नः । मध्य-भारतीयः प्रधानतमो नरेशश्चण्डप्रद्योतः सुहृदस्माकमुत्तरभारतीयो गान्धारदेशाधी श्वरश्च' ।

'एवं, वत्स ! साक्षात्कृतमेव स्यात् त्वया यन्मगधराज्यप्रभावविस्तारार्थं मया दण्डनीतिर्भेदनीतिर्वा कदाचिदेवावलम्बिता । सामनीतिरेवाधिकतरमनुसृता ।

CC-0 Pulwama Collection. Digitzed by eGangotri

तथापि मया भिन्नानि भिन्नानि 'भारतीयानि राज्यानि मगधराज्यसात्कर्तुं न कदापि प्रायाति। अपि तु-तानि बिसतन्तुकोमलैरपि लोहतन्तुदुश्छेद्यैः स्नेहपाशैः ···नूनं पारिवारिकबन्धनैः···मगधराज्येन सह बद्धानि। इयमेव नीतिर्मयाऽद्यतनीषु भारतवर्षस्य राजकीयपरिस्थितिषु उक्ततरा परिलक्षिता। अस्याएव वशान्मगधराज्यमद्याऽऽकारेण विस्तारेण सर्वाणि राज्यानि नातिशयानमपि सर्वाधिकप्रभावशालि निःसंशयमेव। नियतिनिश्चितस्य महत्तमस्योत्तरदायित्वस्य परिपूरणे समर्थतरं च'।

'आरम्भमेवाऽहं तद्दिशि कर्तुं प्राभवम्। तस्य परिपूरणं वत्स एव करोतु। तत्कृते वत्सः समर्थतरोऽनुकूलतरपरिस्थितिसम्पन्नश्च।'

'नियतिर्वत्समनुगृह्णातु।'

'दक्षैः शास्त्रपारङ्गतैराचार्यैः सुशिक्षित एव वत्सः। तथाप्यब्दशतकार्द्धेन प्रत्यक्षमधिगतो राजनीतेरनुभवो मां प्रोत्साहयति किञ्चिद्वक्तुम्।'

'अस्माकं भारतीये राष्ट्रे समाजे च स्नेहेन सौहार्देनैवाऽऽपादयितुं शक्या खल्वेकता···न द्वेषेण शत्रुभावेन बलात्कारेण खण्डप्रायं ह्येतद्राष्ट्रं केवलेन शस्त्रबलेन न जेतुं शक्यम्। जितमपि सूक्तासूक्तोपायावलम्बनेनोपोद्बलितसामर्थ्यया दण्डनीत्या दीर्घकालपर्यन्तं स्ववशे स्थापयितुं वा। अपि च यस्य महत्तमस्य कर्तव्यस्य पूरणार्थमियमेकताऽभीष्टा···तदुद्दिष्टमेव नूनमशक्यं साधयितुमनया बलादारोपितया···एकतया। अतः स्नेहेन सौहार्देनैव सर्वानन्यान् भारतीयान् नृपानाबध्नन् ऐक्यरज्ज्वा, तेषु कर्तव्यबुद्धिं जागरयन्, महता चातुर्येणापवादरूपास्वेव परिस्थितिषु, दण्डनीतिं भेदोपायं वाऽवलम्बमानस्त्वं स्वकर्तव्यपूर्तिमार्गेऽग्रेसरो भवितुमर्हसि।'

'अत्यल्पमिदमुक्तम्। इयं सामनीतिरियं सौहार्दमिक्ता प्रशासनपद्धतिराभ्यन्तरे प्रशासनेऽपि वत्सेनावलम्बनीया। मागधा वाऽन्ये वा प्रजाजनाः पितृवत् सस्नेहं निष्पक्षं न्याय्यं च प्रशासति राजनि यथा विश्वसन्ति तं यथा बहु मानयन्ति तद्वचनपालनार्थं प्राणानपि यथा तृणीकुर्वन्ति न तथा शत्रुवन्निर्दयं सपक्षपातं यथेच्छं प्रशासति शासके। तं तु ते निःशब्दं निष्प्रतीकारमनवरतं द्विषन्तः, प्राप्याऽनुकूलं स्वल्पमप्यवसरं तस्मिन्नेव क्षणेऽधिकारपदाद्भ्रंशयन्ति। पितृवत् प्रशासितुं च नराधिपेन सहनशीलेन धीरेण चावश्यमेव भाव्यम्। असहिष्णुरधीरस्वभावः प्रत्यपकारशीलो हि नृपः स्वप्रजाजनानां हितार्थमनवरतं प्रयतमानोऽपि, तान् संकटेभ्यः सततं रक्षन्नपि, न्याय्यात् पथः स्वयं पदमेकमविचलन्नपि, नातिचिरादेव तेषामुद्वेगकृत्···अन्ते च द्वेष्यो भवति।'

'नास्यायमभिप्रायो यत् प्रशासकेन त्वया काठिन्यपरिजिहीर्षया स्वकर्तव्ये,

CC-0 Pulwama Collection. Digitzed by eGangotri

परिस्थितिवशात् परसंतापकारिणि, समुदासितव्यम् । स्वकर्तव्यानि समुपेक्षमाणा अधीनस्था अधिकारिणः साधारणा वा सेवका, गजनिमीलिकयाऽवधीरणीयाः । तथा सति ह्येतद्राज्यमेव सं,पूर्णं विलीयेत । विलीयेत क्षुद्रकीटकग्रस्तदारुप्रासादवत् । एतादृशेषु परिस्थितिषु वत्सेन वज्रकठोरेणैव भवितव्यम् । तथा सति-प्रजाजनानां त्वं न केवलं प्रियोऽपि तु समादरणीयोऽपि भविष्यसि' ।

'दृढो मम विश्वासो यद्वत्सः नैसर्गिकेण प्रशासननैपुण्येन योग्यायोग्यविवेकसंयमितेन न केवलमेतस्य सुप्रतिष्ठितस्य मगधराज्यस्य रक्षणे परिवर्द्धने च क्षमः स्यात्···अपि तु नियतिनिश्चितस्य तस्य महत्तमस्योत्तरदायित्वस्य निर्वाहेऽपि ।'

'एतां राज्यप्रशासनधुरां चिरात् खलु वहन्नहं श्रान्तः क्लान्तस्तां तव बलवतोः स्कन्धयोः स्थापयितुमिच्छामि । तस्यैतस्य सत्तासङ्क्रमणस्य प्रथमश्चरणक्षेप इति वत्समङ्गदेशस्य प्रधानतमं शासकं नियोक्तुमिच्छामि । तस्मिन् हि नातिविकसिते देशे प्रशासनिकीं क्षमतां लोकरञ्जनचातुरीं समाजकण्टकदण्डधारणशक्ति च प्रदर्शयन् वत्सोऽचिरादेव महत्तमकर्तव्यभारवहनक्षमतामात्मनः प्रस्थापयेत्···इति बलवान् मे विश्वासः ।'

'तच्छीघ्रमेवाऽऽयुष्मान् नवीनमेतं भारं वोढुमितः प्रस्थानं करोतु ।'

एवं स्वैरं स्वमनोरथान् प्रकटीकुर्वन् चिरमास्त ।

CC-0 Pulwama Collection. Digitzed by eGangotri

## पञ्चमः परिच्छेदः

इत्थमनुभववृद्धेन मगधराजेन बिम्बसारेण समुद्बोधितो युवराजोऽजातशत्रुश्चिरात् खलूपनतं यौवराज्यैश्वर्यसुखमनुपभुज्यैवाकस्माद्दूरस्थेऽपरिचितेऽविकसिते भूतपूर्वं शत्रुप्रदेशे वस्तुं नात्युत्सुकोऽपि, नियम्याऽऽत्मानं, समाश्वास्य मातरं, सद्य एव विद्यापीठादागतस्य व्यतीत एवाहनि यौवराज्येऽभिषिक्तस्यास्पृष्टसुखलेशस्य स्वतनयस्य राजाज्ञया पुनश्च दूरदेशगमनस्य वार्त्तां निशम्य खिन्नामतृप्तमातृहृदयतर्षामपि नाम राज्ञोऽयमादेशः केनाऽपि प्रच्छन्नेनोद्दिष्टेन प्रेरितः स्यादिति दुःशङ्कां मनस्येव प्रतिक्षणं पर्यालोचयन्तीं, वारं वारं स्वतनयप्रत्यागमनसायंसन्ध्यालापस्यैव स्वभर्तुः स्मरन्तीं, विमनस्कां चेल्लनादेवीं, 'प्रतिकूलजनस्याविकसितस्याङ्गराज्यस्य प्रधानप्रशासकपदं मत्कृते नूनमाह्वानं स्वयोग्यताप्रदर्शनार्थं, तदवश्यमेतत् स्वाकरणीयम्, प्रदर्शनीया चाऽऽत्मनः क्षमताऽऽत्मानमनुभवविदग्धं प्रशासनचतुरं मन्यमानस्य'सामवेदिनः'पितुः समक्षम्'-इति विनिश्चित्य प्रज्वलितोत्साहदीपोऽचिरादेवांगदेशराजधानीं चम्पां प्रातिष्ठत, तत्साफल्याकाङ्क्षिणा मगधराजेनसुविचार्य प्रदत्तैरनुभवपलितकेशैः परमविश्वासास्पदैःन्यायिकप्रशासनिकसैनिकाधिकारिभिः सहै,कस्मिन् शुभनक्षत्रे प्रभाते, कृतनिराजनः साश्रुनयनकमलयाऽऽरक्तमुखया मूकया स्वजनन्या, कृतमङ्गलतिलक आशीर्वचनमुखरया ज्येष्ठया जनन्या, प्रोत्साहितश्च प्रसन्नसगर्वमुखमुद्रेणाऽऽत्मानमेवाऽऽत्मजरूपेणाऽऽह्वानमुखरे राजकार्यक्षेत्रे पुनः प्रथमं पदक्षेपं कुर्वन्तमनुभवता जनकेन शुभचिन्तकेन ।

प्रवसंश्चानवरतं विस्तृतसस्यश्यामलक्षेत्ररमणीयोभयपार्श्वेन घनच्छायावृक्षपङ्क्तिनिवारिताऽऽतपेन राजमार्गेण, रात्रावपि घनतिमिरायामकृतविश्रामोऽतिचक्राम समृद्धं मगधप्रदेशम् । प्रविवेश चापरेद्युर्मध्यंदिनेऽभिनन्दयितुमिव तत्सङ्कल्पदार्ढ्यं गगनमध्यमधिरोहति भगवति दिनकरेऽङ्गदेश विरलक्षुद्रक्षेत्र नानाविधहिंस्रश्वापदभयङ्करनिबिडवनरातिबहुलमलक्ष्यप्रायग्रामम् ।

प्रवसंश्चानवरतं तथैवातिगहनवृक्षराजिदुर्लक्ष्यसूर्यकिरणेन मृण्मयेन कुमार्गेण पथिकदुःखदेन, प्राप, निमज्जति संततप्रवासपरिश्रान्ते क्षीणप्रभे दिनकरे श्रमापनोदार्थं किल पश्चिमांबुनिधौ, पथिकान्तःकरणानीव सर्वमपि जगतीतलमा-

CC-0 Pulwama Collection. Digitzed by eGangotri

क्रामति सूचिभेद्येऽन्धकारे, खेदजड इव स्तब्धतामुपयाते सदागतौ कदुष्णे, चम्पां बृहद्ग्रामटिकातुल्यवृत्तान्तां सर्वतःप्रसृतघनान्धकारदुर्लक्ष्यविशेषां प्रज्वलितविरलावस्थितप्रदीपसंसूच्यमाननिवासां शून्यचत्वरामनालोकितरथ्यां निःस्तब्धदेवतायतनां निर्मनुष्यामिव विलुप्तजीवनप्रभामिवाङ्गराजधानीं,— मार्गधूलिधूसरितसर्वांगः, प्रस्रवद्घर्मजलक्लिन्नवेषस्तृषाक्रांतः श्रान्तः क्लान्तः उन्मनस्कः निरुत्साहः स्वतुल्यवृत्तान्तेन श्मशानपथिकेनेव मूकेन सहयात्रिदलेन सह ।

कृतस्वागतश्च पांसुलपादैरौदासीन्यमूर्तिभिस्तत्रत्यैरधिकारिभिर्दीनवेषैः, तत्प्रदर्शितेन धूलिबहुलेन विषमेण मार्गेणाश्वं श्रमातिरेकगलद्गात्रं फेनिलमुखं व्यापारयन्, प्रविवेशाचिरादेवाकृतसुधोपलेपं तृणाच्छन्नभित्तिप्राकारं स्थलदुर्गप्रायं श्रीविहीनं जीर्णमङ्गराजप्रासादं पुरातनम् । तत्र चाऽधिकृतैः प्रतिहारिभिर्मलिनजीर्णवेषैर्विस्मयविवृतमुखबिलैरविदग्धैः निःशब्दं प्रदर्शिते विशाले शयनकक्षे प्रविष्टोऽकृताङ्गप्रक्षालन एवाननुष्ठितवेषपरिवर्तन एवाकृतक्षुधोपशमन एव श्रमातुरः नितरां खिन्नः निरुत्साहः शय्यायां धवलसुखदायां चिक्षेप स्वदेहम् । अपरस्मिन्नेव च क्षणे निद्रांबुधावतले न्यमज्जत् ।

प्रबुद्धश्च द्वितीये दिने, पश्चिमाचलचुम्बिदिनकराऽऽरक्तकरैर्वातायनप्रविष्टैः सानुकम्पमिव स्पृश्यमानः नयनयोर्निद्राजडयोः सभयमिव प्रविशन्तीभिः शयनकक्षाभ्यन्तरे शीतलसमीरलहरीभिः सदयमिव चुम्ब्यमानो विलुलितघनचिकुरे स्वेदार्द्रे ललाटे, दिगन्तरेभ्यः प्रत्यागतैः स्वस्वनीडप्रविष्टैर्मन्द मन्दं कूजद्भिः प्रासादकपोतैः सस्नेहमिवोद्बोध्यमानस्तस्मिन्नेव क्षणे परित्यक्तशय्यो विगलितालस्यो विलीनश्रमः परिलुप्तखेदः पश्चिमाशाभिमुखस्य पुरुषाधिकप्रमाणस्य वातायनस्याभिमुखं गत्वा बहिर्दृष्टिं सकौतूहलां न्यक्षिपत् ।

अपश्यच्च-सायंरागरञ्जिते पश्चिमाशांगणे लिखितामिव केनापि चित्रकारेण कौतुकिनाऽऽरक्तवर्णामेकाकिनीं मेघमालां, तदधस्तादेव लोहितायमानक्षितिजचुम्बिनीं दन्तुरां पर्वतमालां, नीचैश्च सर्वत्र प्रसृतां सर्वदिगन्तसंस्पर्शिनीं प्रतिक्षणं कृष्णायमानवर्णां पर्णान्तरालनिःसरत्सान्ध्यधूमरेखासंसूचितविरलमानववसतिं निश्चलहरितपल्लवमहासागरमनुकुर्वन्तीं गहनमहावृक्षराजिमनन्ताम् ।

सुलभोत्साहसम्पत् खलु यौवनम् ।

तस्य हि तामनुपभुक्तपूर्वामिवाक्षतकौमार्यामिव मेदिनीं सकौतूहलमवलोकयतो मनसि सहसा समुदभवत् तामुद्दिश्य काऽप्यात्मीयता । आद्यं प्रियकरमिव स आत्मानं तस्या अकल्पयत् । तस्याऽऽगमनं प्रतिपालयन्तीमिव तां स उत्प्रेक्षयामास । कामयामास च तां सर्गारम्भात् तमेव स्वपतिं प्रतीक्षमाणां किल··· उपभो-

CC-0 Pulwama Collection. Digitzed by eGangotri

वतुमैश्वर्योच्चशिखरे च स्थापयितुम्। विलिल्ये सा खिन्नता, या यौवराज्यैश्वर्यसुखानि राजगृह एव परित्यजतो मनसि तस्योदपद्यत, सा कटुता या पित्रा पुनरपि निष्कास्यमानमिवाऽऽत्मानं परिकल्पयतोऽन्तःकरणे तस्योदभवत्, सा रणरणकभावना या साश्रुनयनां जननीं स्नेहमयीं पुनरपि विहाय प्रवसतस्तस्यान्तःकरणेऽजायत।

आपूर्यत च तस्य हृदयं दुर्दमनीयया दुष्प्रसहया दुर्निवार्यया महत्वाकाङ्क्षया,…'नूनमेतामङ्गप्रदेशलक्ष्मीमेतावत्कालपर्यन्तमत्यन्तमुपेक्षितां नानाविधैरैश्वर्यैरलङ्करिष्यामि। करिष्यामि चैतां मगधराज्यलक्ष्मीतुल्यविभवाम्। अवलोकयन्तु नाम ते सर्वे मां साहसिकमविचार्यकारिणमुद्दण्डं मन्यमाना मम नवनिर्माणक्षमतां…मम प्रशासनकुशलताम्'।

तत्क्षणादारभ्य प्रबलया वात्ययेव तया महत्वाकाङ्क्षयैव केवलया प्रतिक्षणं प्रेर्यमाणो, ग्रहाऽऽविष्ट इव, प्रतिक्षणं प्रतियामं प्रतिदिनं प्रतिमासं प्रतिवर्षमङ्गराज्यनवनिर्माण एव संललाग…अनन्यमनस्कः समुपेक्षमाणो खेदमवधीरयन् विश्रामं तिरस्कुर्वन् मनोविनोदम्।

सर्वप्रथमं सः, स्वराज्यं विशिष्य ज्ञातुमुत्सुकः, समवधीर्य रथादिसुखवाहनानि कृष्णवर्णं महाप्रमाणं प्रथमोपस्थापितमपि सेवायां चिरपरिचितमिव तन्मनोभाववेदिनं संवेदनक्षममेकं प्रभञ्जनवेगं तुरङ्गममारुह्य कतिपयाङ्गरक्षकसहितोऽहर्निशं तस्मिन् राज्ये सर्वत्र बभ्राम। तस्य क्षुद्रतमानपि ग्रामानवर्जयन् तत्रत्यानां सर्वेषां प्रजाजनानां पांसुलपादानामपि दीनतमानामपि स्थितीः निभृतमवलोकयामास। अचिरादेव च स्वं प्रदेशं करतलामलकवत् सुनिपुणं जानन् स आत्मनैव निभृतं तदुन्नतियोजनाः रम्या भव्याः कल्पयामास। निश्चिकाय च तन्मध्यात् सम्भाव्याः साधनसम्पदं पर्यालोच्य।

आरभत चाऽकृत्वैव शंखनिनादं स्वमहत्तमकार्यम्।

सर्वप्रथमं स आत्मनः सहकारित्वेनाऽङ्गदेशीयानेव यूनः प्रामाणिकान् स्वसमानमहत्वाकाङ्क्षाप्रेरितान् सुशीलान् प्रत्येकशः परीक्ष्य सेवायां जग्राह। परदेशीयांश्चमागधानपि-वार्धकक्षीणोत्साहसंपदोऽप्रामाणिकान् यथास्थितिभवत्तान् श्रमदरिद्रान् राजपुरुषानुच्चावचपदाधिरूढान् तेन तेन निमित्तेन सेवाया बहिश्चकार।

एवं कृत्वा साहाय्यसंपत्परिग्रहं स तस्याः सुनियोजने चित्तं प्रादात्। तत्सहयोगेन च नवनिर्माणकार्यमारभत प्रात्यक्षिके क्षेत्रे।

CC-0 Pulwama Collection. Digitzed by eGangotri

कृषिप्रधानस्यांगदेशस्य समुन्नतिस्तन्मध्यवाहिनीनां भागीरथीसदृशीनां महानदीनां जलसम्पद अक्षय्याया दोहनेनैव शक्येति सः समस्तेऽपि राज्ये प्रवहन्तीनां प्रसिद्धानामप्रसिद्धानां महतीनां क्षुद्राणां नदीनां जलस्याधिकतममुपयोगं कृष्यर्थं चिकीर्षुस्तन्त्रज्ञैः कर्मठैः नवनिर्माणरुचिभिरधिकारिभिस्तत्र तत्र सेतूनबबन्धत। इत्थं देवमातृकप्रायं तं प्रदेशं नदीमातृकं विधाय स उपलभ्यायाः प्रचुरजीवन सम्पदोऽधिकाधिकोपभोगार्थं प्रचुरतरसस्यसम्पन्निर्माणार्थं च कृषीवलान् तैस्तैः प्रलोभनैः प्रोत्साहयामास। क्रमशः परिवृद्धे मौलिके संपत्स्रोतसि, तदुपजीविनोऽन्य उद्योगाः नातिचिरादेव स्वयमेव च पोषमभजन्। मूले हि तृप्ते पल्लवाङ्कुराः वयमेव तृप्यन्ति।

एवं...शनैः शनैरुच्चतरीभवन्तं सामान्यजनसंपत्स्तरं वीक्ष्य सः शासनपुरुषस्य हृदयस्थाने विराजमानस्य राजस्वविभागस्य पुनर्घटने दत्तचित्तो बभूव निर्लोभान् कर्तव्यकठोरान् प्रामाणिकान्-विशेषतोऽङ्गदेशीयानेव यूनः परीक्ष्य तस्मिन् विभागे न्ययुङ्क्त। लुब्धान् कर्तव्यविमुखानप्रामाणिकान् तद्देशीयानन्यांश्च-मागधानपि-अपराधलिप्तानेव जनसामान्यसमक्षमङ्गभङ्गसदृशेन कठोरेण दण्डेनाशात्, सेवायाश्व बहिश्चकार। सामान्यजनसङ्क्षोभं परिहरन्नेवाधिकाधिकराजस्वसङ्ग्रहे रुचिं क्रमिकां चकार। नातिचिरादेव, यथाऽपेक्षं, तस्य प्रधाना अप्रधानाश्च कोषागाराः शनैः शनैर्धनधान्यसंपन्ना बभूवुः।

प्रजाजनेभ्यः सुखितेभ्योऽप्रतिरोधमुपात्तायास्तस्याः संपदोऽपाराया विनियोजनं स तेषां जीवनस्तरोन्नयनार्थमेवाकरोत्, न स्वसुखोपभोगार्थम्। 'क्रमशः परिवर्धमानं जनसामान्यसंपत्स्रोतः प्रदेशस्य दूरतमेष्वपि दुष्प्रवेश्येष्वपि सर्वथोपेक्षितेष्वपि भागेषु प्रवहतु नाम'—इति विचार्य सः समस्तेऽपि राज्ये सर्वर्तूपभोग्यानां छायावृक्षसुखदानां पेयजलसुविधोपपन्नानां सुलभविश्रामाणां मार्गाणां जालमिव प्रसारयामास। क्रमशः परिवर्धमानेन जनसामान्यसांपत्तिकस्तरेण सहैव परिवर्धमानस्य तस्करलुण्ठकवञ्चकाऽऽदिसमाजकण्टकजालस्योच्छेदनार्थं सः समस्तस्य रक्षकविभागस्य पुनर्घटनाय संकल्पमकरोत्। 'सामान्यतो दृष्टमिदं तथ्यं यद्रक्षकविभागोऽयं भक्षकविभाग एवाऽचिराद्दुष्परिणमत'-इति मनसि कुर्वन् स तत्पुनर्गठने विशेषतः सावधान आसीत्। न केवलं स परपीडकान् परद्रव्यशोषिणः। कर्तव्यपराङ्मुखान् लुण्ठकबान्धवान् रक्षकान् सेवाया बहिश्चकार, अपि तु-सुपरीक्षितान् सेवानिरतान् प्रामाणिकानपि सततं छद्मवेषं गृहीत्वा तेषु तेषु स्थानेषु तेषु तेष्ववसरेषु स्वयं परीक्षाञ्चक्रे, अन्यैर्वा परमविश्वासाऽऽस्पदैरुच्चाधिकारिभिः निभृतं परीक्षयाञ्चक्रे। उत्कोचकांश्च रक्षकान् जनसामान्यसमक्षं कठोरमददण्डत...निर्दयम्।

CC-0 Pulwama Collection. Digitzed by eGangotri

'केवलाया दण्डभीतेरेव समुत्पन्ना प्रजाजनानां सन्मार्गनिष्ठा चिरस्थायिनी न स्यात्। तस्याः सुशिक्षितायाः सुसंस्कृतायाश्चित्तभूमेर्मौलिका समुत्पत्तिरेव तदर्थमावश्यिका' इति मनसिकृत्य स राज्ये प्रतिग्रामं शिक्षाप्रसारार्थं स्थापयित्वा पाठशालास्तासु सुशीलान् सुसंस्कृतान् सन्तुष्टानध्यापकान् न्ययुङ्क्त।

एवं क्रमशः संरुन्नतरीभूतायां साधारणजनजीवनपद्धतौ, प्रवृद्धायां व्यावसायिकचेष्टायां, प्रभावशालित्वमापन्नायामाभ्यन्तरिकरक्षाव्यवस्थायामुच्चतरीभूतायां प्रजाजनानां योग्याऽयोग्यविवेकक्षमतायां-स्वाभाविकतयैव-तद्राज्यव्यवहाराऽऽलयेषु व्यवहारविधिः संख्याकार्श्यमवाप। तथापि सः तत्रापि निष्पक्षतया शीघ्रतया च विचारार्थं न्यायिकप्रशासनिकपद्धतिर्यथा निःस्वार्था वस्तुतन्त्रा कार्यक्षमा च स्यात् तथा तांस्तान् उपायान् प्रायुंक्त।

इत्थं विधाय स्वप्रजाजनान् सुरक्षितान् सुशिक्षितान् सुस्थितांश्च मगधयुवराजः क्षणमात्रमप्यविश्राम्यनधिकतरयैव तत्परतयाऽधिकतरेणैव समुत्साहेनाङ्गसेनायाः पुनर्घटनाय परिकरमबध्नात्। भंग्त्वा कालात्ययदुर्बलामक्षमां क्षीणां शिथिलनियन्त्रणां तां, तस्याः स्थाने संख्ययाऽनत्यधिकामपि तीक्ष्णबलां सुनियंत्रितां कठिनतमकार्यक्षमां नवीनां सेनां व्यधात्। अवधीर्य पित्रा सहप्रेषितानां वृद्धानां मागधानां सेनाधिकारिणां निःशब्दं वैमत्यं, स तस्यामङ्गदेश्यानेव यूनो दक्षान् बलिष्ठान् स्वाज्ञाकारिणोऽगृह्णात्-तांश्च सुयोग्यपरिश्रमिसैनिकाधिकारिभिर्युद्धाभ्यासेऽशिक्षयत। विद्यापीठे ग्रन्थेषु बहुवारमधीता युद्धकलायास्तास्ता विधाः प्रात्यक्षिके क्षेत्रे परीक्षितुमुत्सुकः स्वयमपि तैः सह कृतकयुद्धेषु परिशश्राम··· मुसलधारं वर्षति देवे प्रचण्डं तपति चण्डकिरणे दुष्प्रसहवेगं वहति गन्धवाहे, करतलसमे भूप्रदेशे, विषमे पर्वतीयदेशे, दुष्प्रवेश्येऽरण्यस्थलेऽनाव्ये महानदीप्रवाहे वा। आकौमार्यादेव कृताभिरुचिश्च नवीनानामकल्पितपूर्वाणां युद्धविधानां युद्धयन्त्राणां च परिकल्पने, तास्ताः संघर्षविधास्तानि तानि मारात्मकान्यायुधानि तानि तानि वेगवन्ति युद्धवाहनानि स्वयमुत्प्रैक्षिष्ट, पर्यैक्षिष्ट च तानि परमविश्वासाऽऽस्पदैः सहयोद्धृभिः साकमतिनिभृतम्।

'पुरोदृष्टिविहीनं याथार्थ्यानभिज्ञं स्थूलप्रत्यक्षमात्रनिर्भरं सैन्यबलं नूनं पशुबलं नातिशेते'—इति पर्यालोचयन् स नवीनतया निर्मितस्याङ्गसैन्यस्याङ्गत्वेन सर्वदर्शिसर्वस्पर्शिसर्वगामिसर्वावगाहिनेत्रमिव गूढपुरुषबलं विनिर्ममे। निर्माय च तत् तदेकवशंवदमतिविश्वसनीयं गूढतमरहस्योद्भेदनसमर्थं—आदौ कौतुकात्तदनन्तरं कौतूहलादन्ते च स्वसामर्थ्योपोद्बलनार्थं—स अंगदेशे बहिश्च तद्व्यापारयितुमारभत।

CC-0 Pulwama Collection. Digitzed by eGangotri

यथा यथा च स तेनातीन्द्रियशक्तिसंपन्नेन दिव्यचक्षुषेव चारचक्षुषा-स्वराज्ये बहिश्चावलोकयितुमारभत तथा तथा सर्वथाऽनपेक्षितेषु स्थानेषु भ्रष्टाचारं कर्तव्यशैथिल्यं विषयलोलुपत्वमकस्मात् साक्षात्कुर्वतस्तस्य मानवीयदुर्बलताऽसहिष्णोः पराधिक्षेपप्रवृत्तिः सर्वप्रमर्थमन्यमानस्याहंमन्यता चाऽधिकाधिकमेवोद्ग्रा बभूव। स्वभावत एव तीव्रा, सुसंस्काररव्यक्तोपशमना तस्याहङ्कारिनैव समयेनाङ्गदेशे प्राप्तेन प्रशासनसाफल्येन प्रचण्डैवाऽजायत।

एवं सदसद्विवेकशक्तिपराभविष्णोरहङ्कारस्य वश्यतामात्यन्तिकीमेत्य स यदाऽन्ते छिद्रान्वेषि प्रकृतिकुत्सितमपसर्पचक्षुः—नियतया यत्किंचित्कारिण्या प्रलोभ्यमान इव—स्वपितुरेव राज्ये प्रशासनयन्त्रे सुहृन्मण्डले व्यापारयितुमारभत तदा तत्रापि तेषु तेऽत्रप्रत्याशिनेषु मर्मस्थानेषु यथेच्छाचारं कार्पण्यं भीरुत्वं—सर्वमपि कृतसौमनस्याऽऽवृतं—समवलोक्य तस्य पितुर्विषय आ शैशवादेव बिसतन्तुक्षीणाऽऽदरबुद्धिः लोपमात्यन्तिकं ययौ।

निपुणतरं प्रशासने क्षमतरं दण्डधारणे समर्थतरं विवेके स्वात्मानं पितुरपेक्षया, भाग्यवशाल्लब्धराज्यस्य संघर्षपरिजिहीर्षया नूनं तैस्तैः राजवंशैः प्रस्थापितपारिवारिकसम्बन्धस्य, मन्तुमारभत।

अंगदेशप्रशासनकालस्य प्रारम्भे नियमपूर्वकं मगधराजसेवायां तेन संप्रेष्यमाणाः सविस्तराः कार्यप्रगतिवृत्तान्ताः क्रमशोऽनियमिततामल्पतां ह्रस्वतां चाऽवापुः।

तस्येयं स्वेच्छाकारिताप्रवृत्तिः क्रमश एतादृशीं कोटीमध्यारूरोह यत् स स्वतन्त्र इव वर्तितुमारभत।

शक्तिः—विशेषतः पापिष्ठा शक्तिः—समय एवानियन्त्रिता दृढं—काल एवामर्यादिता कठोरं—पश्यत एवागतिकं तत्प्रयुञ्जानस्य—अकुतोभयाऽगम्यगमना च भवति।

प्रोत्साहिताइव हि तस्य दुर्लभप्रसादस्य स्वयमेकान्ते तेषां वृत्तान्तान् निशब्दं सावधानतया शृण्वतः कौतूहलेन, तस्य स्पशाः, स्वयमेव, मगधराजस्य परिवाराभ्यन्तर एव विषकीटका इव भ्रमितुमारभन्त, शनैः शनैश्च तस्य मनो दूषयितुं विषमयैरिव मर्मदाहकैर्मगधराजपारिवारिकवृत्तान्तैरप्रियैः।

अचिरादेव च, स स्वजनकं साक्षादा जन्मन एव तदनिष्टचिन्तकं मन्तुमारभत।

आ शैशवादनुभूतं पितुः निःस्नेहं वर्तनं, सुलभदोषायां तस्य बाल्यावस्थायामनेकदा दृष्टचरं तस्य, त्रुटिलेशं तस्योपलभ्य क्रोधोद्दीप्तं, मुखं, क्षुद्रतमं निमित्तं

CC-0 Pulwama Collection. Digitzed by eGangotri

प्राप्य तस्याकस्मात् सुदूरावस्थिते तक्षशिलाविद्यापीठेऽध्ययनार्थं किल सम्प्रेषणं द्वादशवर्षपर्यन्तं तस्य तत्र स्थापनं निरन्तरं, ततः प्रत्यागतस्य—जनलज्जया यौवराज्येऽप्रत्याख्येयेऽभिषिक्तस्य—शीघ्रमेव वनप्रायेऽदेशसदृशे प्रदेशे प्रमुखशासकापदेशेन पुनर्निर्वासनं, स्वीकृत्याऽऽह्वानं स्वयोग्यतां प्रदर्शयितुं प्राणपणेन प्रयतमानस्य तस्य समुपेक्षणं, स्वप्रयत्नेषु क्रमशः साफल्यं लभमानस्य तस्य निःशब्दमवधीरणं…सर्वमेव…ऐकान्तिके तीव्रसंवेदने तस्य मानसे दुर्ग्रहमुपर्युक्तं प्रबलतरं व्यधात् ।

घनतिमिरेणाकालदुर्दिनसायंप्रभेव, आ जन्मनः निरानन्दस्वभावस्य तस्य सा उत्साहसम्पत्…सा महत्वाकाङ्क्षा,…उग्रया दुर्भेद्ययाऽनाकलनीयया स्तब्धतया शनैः शनैरभिभूता, नातिचिरादेव जाड्यमिव प्रपेदे ।

CC-0 Pulwama Collection. Digitzed by eGangotri

## षष्ठः परिच्छेदः

'—मया खलु यौवराज्यैश्वर्यसुखोपभोगं तृणीकुर्वता, सामान्यप्रशासकवदहर्निशं प्राणपणेनैतानि पञ्चवर्षाणि प्रयतमानेन, प्रशासनार्थं प्रदत्तस्यास्याङ्गदेशस्य सर्वथा समुपेक्षितस्य सर्वाङ्गीणविकासार्थं ते ते कार्यक्रमाः संकल्पिता योग्यसाधनसम्पन्माध्यमैश्च सफलीकृताः। स्वयमागत्य तेषां सकौतुकं निरीक्षणं तु दूर एव··· तातेन प्रोत्साहनपरसन्देशेनापि नाभिनन्दितः। ···अननुकूल एव स मम—आ जन्मनः।···न स्मराम्येकवप्यवसरं यस्मिन् स मां पितृस्वभावसुलभेन केवलेन स्नेहेन शिरस्याजघ्रौ, शुद्धेनानन्देन मामालिलिङ्ग, कौतुकेन वा सहर्षेणाभिननन्द।··· मामवलोक्यव तस्य मुखमुद्रा कयाऽप्यनाकलनीयया दुश्चिंतयेवाऽऽक्रम्यते। तस्य नयनज्योतिः कयाऽपि भयलहर्येव निर्वाप्यते।···किमत्र कारणं स्यात्?

—एवमादि चिन्तयन्तमेकस्मिन् प्रभाते चम्पानगर्याः नातिदूरवर्तिन्याः प्राकारपरिवेष्टितायाः सशस्त्ररक्षकरक्षितायाः निषिद्धजनसामान्यप्रवेशाया आयुधनिर्माणशालाया विस्तीर्णे प्राङ्गणे तत्रत्यैः कल्पनाचतुरैस्तन्त्रज्ञैरधिकारिभिः सोत्साहं प्रदर्श्यमानं रथमूसलनामकं रिपुसैन्यसागरविलोडनक्षमं नवीनतया कल्पितं रणयन्त्रमन्यमनस्कतयैव परीक्षमाणं, कृष्णप्रायवर्णं पुरुषाधिकप्रमाणकायं लोहकवचाऽऽवृतमुदग्रमुखमुद्रं रक्तनयनमजातशत्रुं सत्वरमुपसृत्य सादरं कृतप्रणामः प्रासादप्रतिहारिप्रमुखः स्वर्णदण्डधारी न्यवेदयत् 'देव! महाप्रतापस्य कोशलेशस्य युवराजः श्रीमान् विरुद्धको देवस्यानामयं द्रष्टुं स्वयमेवाकस्मात् कृताऽऽगमनः प्रासादे देवस्य प्रत्यागमनं प्रतिपालयंस्तिष्ठति, श्रुत्वा देवः प्रमाणम्।'

अजातशत्रुस्तु, सर्वथाऽनपेक्षितां वार्त्तामिमां श्रुत्वा किञ्चित्कौतूहलाऽन्वितोऽपि पूर्ववदेव नवोनरणयन्त्रपरीक्षणव्यापृतमिवाऽऽत्मानं प्रदर्शयन्, अनुगृह्य कल्पकान् शिल्पिनः समुत्सुकान् सकौतुकदृष्टिक्षेपेणैकमात्रेण, तुरगमारुह्य ततः प्रस्थितोऽत्वरितगतिः, पर्यालोचयन् किमपि स्वात्मनैव प्राप सद्यःकृतसुधोपलेपोज्ज्वलं शस्त्रभीषणप्रहरिरक्ष्यमाणमहाद्वारं कृतकायपरिवर्तनमिव भासमानं प्राचीनं प्रासादं वैभवशालिनम्। समालिलिङ्ग च क्षणमात्रेणैव कृताकारगूहनः

CC-0 Pulwama Collection. Digitzed by eGangotri

निर्मलहास्योज्ज्वलमुखमुद्रः स्वागतवचनमुखरो बाहू प्रसार्य पुरत आगतः ह्रस्व-स्थूलकायं गौरवर्णमपि सुखलोलुपतया निस्तेजस्कमिव भासमानं कृष्णवर्तुलाङ्कितनिष्प्रभनेत्रं कोमलदुर्बलमुखमुद्रं समानवयस्कं कोशलयुवराजं सस्मिताननं ताम्बूलरसरञ्जितरदम्।

तत्पदानुरूपेणातिथिसत्कारेण च तं संमान्य, कृतविश्राममपगतप्रवासखेदं रजनीमुखे यदा समीपवर्तिषु निबिडेषु विपिनप्रदेशेषु सुलभया मृगयया मनोविनोदयितुं तं बह्वनुरुद्धाऽपि साफल्यं न लेभे तदा, प्रौढायां रजन्यां, पूर्वाचलशिखराधिरूढे रजनीनाथे क्षीणैः स्वकरैः स्पृशत्यातपक्लान्तां निद्राङ्कलीनां धरित्रीं, निवृत्तेषु विश्रामार्थं परिचारकगणेषु, तेन सह प्रासादाट्टके प्रारब्धपानमहोत्सवः किमपि किमपि जल्पन् तथैव तस्थौ··· स्वात्मनैव वितर्कयन् तदागमनप्रयोजनम्।

····"विचित्रा···अविचारितरमणीया नूनमस्य जगतो रीतिः। न कोऽपि चिरमुपभुक्तमपि महत्त्वशालि स्वाधिकारपदं स्वेच्छया त्यक्तुमिच्छति, न कोऽपि जरापलितकेशोऽपि भारायमाणं राजमुकुटमुज्झितुम्, न कोऽपि वार्धकजर्जरितेन्द्रियोऽपि···वैषयिकसुखानि'··· स्वैरमीषदस्फुटवर्णमाहार्द्धमीलितारक्तलोचनो मदजडः सोपहाससहासवक्रीभूतस्थूलाधरोष्ठः कोशलयुवराजो विरुद्धकः शनैः शनैः··· उद्वमन्निव चिरात् खलु स्वान्तस्तले विवर्तमानं, स्वानुकूलस्थलकालव्यक्तिविशेषानुपलंभात् तत्कालपर्यन्तं स्तम्भितमिव प्राणपणेन, नैराश्यपूर्णमाक्रोशं···मद्यप्रभावेणोच्छृङ्खलितवृत्तिः।

'शैशवेऽभ्यस्तविद्या···यौवने विषयैषिणो···वार्द्धक्ये मुनिवृत्तयो···योगेनान्ते तनुत्यजो महापुरुषाः···नूनमस्माकं धर्मशास्त्रिणां कविवराणां च दिवास्वप्नपुरुषा एव न कोऽपि जरातिरेकवेपमानमस्तकोऽपि, किरीटं स्वेच्छया संन्यस्यति।'

'सर्व एव शन्तनवः। न कोऽपि रघुः।'

'किं पुरातनकालविमर्शेन ?···भ्रातः ! अस्माकमेव समयं पर्यालोचय। अवन्तीशः स्वनामधन्यो महासेनश्चण्डप्रद्योतः पित्तातिसारविलुप्तद्योतोऽपि स्वतनयायातिक्रान्तयौवनाय वराकाय दुरूहं राज्यभारं नार्पयति। महाप्रतापो मद्रदशमहाराजः स्वतनयां विकसत्तारुण्यकलिकां पलितकेशाय तव जनकायाग्निसाक्षिकं दत्वाऽकुतोभयंमन्यः श्रान्तान्यपि क्लान्तान्यपि स्वेन्द्रियाणि बलाद्विषयेषु व्यापारयति। अस्माकं पितृदेवता अस्मान् वैषयिकसुखकर्दमनिमग्नान् महत्तमराज्यभाराक्षमान् च मन्यमानाः स्वयं गलितगात्रा अपि विषयसुखपाशेभ्य आत्मानं न मोचयन्ति।'

CC-0 Pulwama Collection. Digitzed by eGangotri

'तिष्ठतु तावत्तत्तथा। त्वया तु, भ्रातः, किमपराद्धम् ? तव तु को दोषः ? त्वयि तु का त्रुटिः ? आ जन्मनो गम्भीरस्वभाव, आबाल्यान्मातुः समवयस्कानां च सामन्तपुत्राणां प्रदूषकात् स्नेहसम्पर्कात् प्रसह्य रक्षित, आ कौमारात्तक्षशिला-विद्यापीठसदृशेऽतिविख्याते नियमकठोरं गुरुकुलेऽनुशासितो, यौवराज्ये महता समारोहेण समस्तभारतीयनृपचक्रसमक्षं विधिवदभिषिक्त, एतत्सदृशस्य वनप्रायस्याविकसितस्याननुकूलस्य प्रदेशस्य प्रशासने (-परीक्षणार्थं नूनं योग्यतायाः-) नियुक्तः तस्मिन्नपि सफलः, त्वं तु अर्हसि, सम्प्रति त्रिंशद्वर्षीयो मगधेशपदम् ।'

'न हि त्वं···अहमिव···विषयलुण्ठितः क्षीणबलोऽविनीतः। त्वयि तु नूनं विद्यते प्रखरा क्षात्रशक्तिः, दुर्दमनीया महत्वाकाङ्क्षाऽप्रत्याख्येया प्रशासननिपुणता।···भ्रातः । न त्वं जानासि । समस्तेष्वपि राजकुलेषूत्तरभारतवर्षीयेषु त्वमधुनाऽहोरात्रं सकौतुकमुल्लिख्यसे। सर्वेऽपि नृपा—अस्माकं पितृचरणास्तेषामन्यतमा एव—स्वं स्वं तनयं त्वामेवानुकर्तुमहर्निशं प्रेरयन्ति। सर्वेऽपि राजानस्त्वां बहु मन्यन्ते। त्वयि च भाविकं प्रबलं भारतीयराजस्वनन्यतमं सम्राजं समुत्प्रेक्षन्ते···ऋते तव पितुर्मगधराजस्य बिम्बसारस्य। न जाने किमिति—परन्तु स अद्यापि त्वयि राज्यप्रशासनभारं विन्यस्याऽऽत्मनः मानवशरीरलाभं सार्थकीकर्तुं (विहस्य) आत्मानमस्माज्जन्ममरणचक्रान्मोचयितुं वानप्रस्थाश्रममङ्गीकर्तुमनुत्सुक एव लक्ष्यते। अस्माकं पितृचरणास्तस्य परमविश्वासाऽऽस्पदम्। नास्ति च तैः सह तस्य मन्त्रणालेशोऽप्येतस्मिन् विषये। अत्यल्पमिदमुक्तम्। अस्माकं पितृचरणैस्त्वादृशपुत्रवरण्यलाभनिमित्तमेकदा विशेषदूतमुखेनाभिनन्दितोऽपि न स यथापेक्षं सगर्वं हर्षं प्रकटीचकार। अपि तु मौनमेवाङ्गीचकार। किमत्र कारणम् ? किमिति स दुर्वहं स्वभारं त्वयि नाद्यापि विन्यस्यति ?···किमिव दौर्बल्यं त्वयि स खलु पश्यति ? कमिव लभेत स योग्यतरं त्वदपेक्षया स्वोत्तराधिकारिणम् ?

'शृणु···भ्रातः ! न किमपि दौर्बल्यं पश्यति त्वयि सः। नान्यं च योग्यतरमुत्तराधिकारिणं लब्धुं तस्याऽऽकाङ्क्षा ।···एकैव तस्याऽऽकाङ्क्षा—'अन्तिमनिःश्वासपर्यन्तं प्रभुता ममाक्षुण्णा तिष्ठत्विति। न केवलस्य तस्य। अस्मत्पितृचरणानामपि । उज्जयिनीश्वरस्यापि। मद्रदेशाधिपस्यापि। एते ह्यस्माकं 'गुरुजना' वार्धकेन क्षीणशरीरा अपि अक्षीणवासनाः शृगालबुद्धयस्तानि तानि···आपातत उदात्तानि परहितकारीणि सद्भावनामात्रप्रेरितानि···वस्तुतः स्वार्थभावनामात्रसमुद्भूतानि निमित्तान्युररीकृत्य···प्रभुतां नान्यस्मिन्, नात्मजेऽपि, विन्यसितुमिच्छन्ति। प्रभुताया मद एवैतादृशः। अहं तु मन्ये—प्रसह्य सिंहासनाद्भ्रंशनीया एते। बलात् सन्यासं लम्भनीयाः। हठात्······' एवमादि बहु जल्पंश्चिरमास्त।

मगधयुवराजोऽजातशत्रुस्तु, कोशलयुवराजं तृणवन्निःसारं चिन्तयन्नपि निभृतं, प्रकटतस्तस्याऽऽभ्यन्तरिकभावोद्गारमादौ सस्मितं ततः सावधानं ततः

CC-0 Pulwama Collection. Digitzed by eGangotri

सगाम्भीर्यं ततश्च सविचारं शृण्वन्…अन्ते गूढविचारकलुषितमुखमुद्रो मूर्तिवत्तावत् तस्थौ…आकर्णयन् मदविह्वलस्य तस्य भावोद्रेकमधिकाधिकामसम्बद्धतां प्राप्नुवन्तं यावत् स कोशलयुवराजो मदनिद्रापारवश्यं नायासीत् ।

तथाभूतं च तं समाहूतैः परिचारकैस्तच्छयनकक्षाभ्यन्तरमनाययत् । स्वयं त्वेकाक्येव किमपि चिन्तयन् निभृतं चिरमतिष्ठत् प्रासादाट्टके, विस्मृतमद्यचषको, ध्यायन्नु निर्निमेषयाऽऽरक्ततरया दृष्ट्याऽनागतं रहस्यमयं क्षीणचन्द्रे निरानन्दे दुर्लभनक्षत्र आनन इव भवितव्यताया गूढभावे, गगनफलके,—सानुकम्पेनेव निशीथ-समीरणेन मन्दमन्देन स्पृश्यमान उत्तप्त उच्छूननाडीकलङ्किते ललाटे,…अन-भिज्ञः नातिदूरवर्तिनीषु सर्वव्यापितिमिरवशाद्दुर्लक्ष्यविशेषासु वृक्षराजिषु सहसा समुद्भूतस्य शृगालरुदितस्य करुणस्य…अमङ्गलस्य ।

CC-0 Pulwama Collection. Digitzed by eGangotri

## सप्तमः परिच्छेदः

व्युष्य कतिपयान् दिवसानङ्गराजधान्यां चम्पानगर्यां, संभुज्य राजकीयमतिथिसत्कारं यथेच्छं, प्रतिन्यवर्तत कोशलदेशं युवराजो विरुद्धको निरर्गलरसनो विस्मृतप्रथमरात्रिसंलापो मगधयुवराजमनःस्थित्यनभिज्ञः ।

यथापूर्वमनुससार नियमितां दिनचर्यां प्रकटं धीरगम्भीरोऽपि प्रकाशमविचलितोऽपि गूढं कटुविचाराऽऽलोडितहृदयोऽजातशत्रुः ।

एकदा च, सन्ततप्रवासपरिश्रान्तेषु पश्चिमाम्बुनिधौ स्नातुमिव प्रविशत्सु विषमाश्वाश्वेषु, तद्रथमज्जनोत्क्षिप्तैः पश्चिमाम्बुनिधिजलकणैरिवाङ्किते नीलकृष्णे गगनाङ्गणे नक्षत्रैः, राजप्रासादाट्टालकावस्थितकुशलवादकवृन्दवाद्यमानमङ्गलवाद्यश्रुतिसुखदध्वनिलहरीवाहिनि मन्दं मन्दं वहति निशामुखसमीरणे, विकसद्विविधकुसुमसुमनोहरगन्धपरिपूरिते प्रतिक्षणघनीभवन्नैशान्धकारनिगीर्यमाणविशेषेऽपि मन्दनक्षत्रालोककिञ्चित्प्रकाशिते विविधछायावृक्षसंघट्टननिबिडीभवत्तिमिरे प्रासादान्तर्वर्तिनि रमणीय आरामे, सुखासने समुपविष्टं विचारमग्नमुदासीनं युवराजमजातशत्रुं निःशब्दं समुपसृत्य प्रधानप्रतिहारी, चिरातिरेकप्रस्फुटितघर्मबिन्दुरपि स्वामिभयान्नियन्त्रितात्मा, बिभ्यदिव स्वामिनं विचारतन्द्राया जागरयितुं,संयमितेन स्वरेण मगधराजदेव्या अखण्डसौभाग्यमण्डिताया वैशालीदेव्याः राजगृहादागमनमाकस्मिकं निवेदयामास ।

अजातशत्रुस्तु, सर्वथाऽप्रत्याशितां तां वार्त्तां निशम्य चकितो, हठात् समुत्सार्य चिन्ताभारं, धीरगम्भीरया गत्या प्रासादमहाद्वारं गत्वा, धूलिधूसरितहर्यंककेतु मण्डिताद्धवलाश्वाद्रथादवतरन्तीमनवरतप्रवासपरिश्रान्तामप्यतिरोहितप्रभाविशेषां पीतोज्ज्वलक्षौमावृतकमनीयदेहलतां प्रासादमहाद्वारलम्बमानप्रखरदीपप्रकाश्यमानरत्नग्रैवेयकां विनम्रमहारक्षकाभिवन्द्यमानां गम्भीरमुखमुद्रां रेखाभासकलङ्कितभालप्रदेशामस्फुटकृष्णवर्तुलाङ्कितनेत्रकमलां जननीं चरणकमले निपीड्य ववन्दे ।

तया च सहसा स्निहयन्नेत्रोत्पलया प्रस्फुटन्मधुरस्मितकोमलमुखमुद्रयाऽस्फुटाशीर्वचनं घनचिकुरे वन्दनाम्रे सुवासिते मस्तके कोमलेन करतलेन संस्पृष्टः,

CC-0 Pulwama Collection. Digitzed by eGangotri

सादरं सस्नेहं तां हस्तकमले धृत्वा, सत्स्वपि सेवासमुत्सुकेषु प्रतिहारिषु पङ्क्ति-बद्धेष्वानम्रेषु, स्वयं, तस्याः कृते परिकल्पितं राजगृहप्रासादान्तःपुरकक्षतुल्यविभवं कक्षमनयत्। तन्मार्गपरिश्रमापनोदार्थं च प्रधानपरिचारिकामाज्ञापयामास।

प्रहरमात्रानन्तरमेव सा प्रक्षालनापनीतप्रवासखेदा कृतवस्त्रपरिवर्ता कथमपि विहितक्षुधोपशमना,-अनिवृत्त्यैव शयनार्थं,-वेत्रधारिणीमुखेन युवराजदिदृक्षामसूचयत्।

मगधराजकुमारोऽपि तां सूचनामधिगत्याधिकमेव समुत्सुकमानसस्तस्मिन्नेव क्षणे विशाले महार्ह-पुष्पकोमल-विचित्राऽऽस्तरणसच्छादितभूतले रत्नदीपमन्दालोकालोकिताऽभ्यन्तरे मन्दसमीरदोलायमानकौशेययवनिकाऽऽवृतबृहद्वातायने रजतधूपपात्रनिःसरद्धूपलहरीसुवासिते तस्याः शयनकक्षे समुपतस्थौ। कृतासनपरिग्रहश्च, तदाज्ञामनुसरन्, दृष्टिक्षेपमात्रेण वेत्रधारिणीं ततो गन्तुं प्रवेशमात्रं च निषेद्धुमाज्ञापयामास।

अवलोकयामास च मातृमुखमर्द्धप्रकाशितं विलुप्तस्मितं स्पष्टतरकृष्णवलयदूष्यमाणोदासीननयनकमलं गम्भीरं···जिज्ञासया निःशब्दया।

क्षणमात्रं विचारमग्नेव, क्षणमात्रानन्तरं कृतकठोरनिश्चयेव, वैशालीदेवी, नैराश्यपूर्णया स्वदृष्ट्याऽऽबध्नतो स्वतनयदृष्टिं कौतूहलपूर्णां, परिहरन्तो सेविकाजनश्रुतिं मन्दं मन्दमुवाच-'अज !···अधिकारस्तव संकटापन्नः। अतः समुद्बोधनार्थं तव···अहम्···एवम्···अकस्मादागता।'

अजातशत्रुस्तु, गूढचरमाध्यमेन मगधराजस्य तद्विषयकमौदासीन्यं जानन्नपि तत्रत्यायाः परिस्थितेर्वैपरीत्यमेतादृशीं पराकाष्ठामापन्नमजानन्, 'नूनं किमपि प्रबलमेव कारणमुद्भूतं स्यात्तत्र यद्वशादियमेवं चिन्तातुराऽकस्मादिहाऽऽगता-' इति चिन्तयन् कृष्णतरमुखमुद्र उच्छूनतरनाडीकलङ्कितभालपट्ट आकुञ्चिताऽऽरक्ततरनयनो मातृमुखं तथैवावलोकयंस्तूष्णीं तस्थौ प्रतिपालयन् तद्वचनान्तरं···निःशब्दः।

'मगधराजस्त्वां स्वराज्योत्तराधिकाराद्भ्रंशयित्वा तव पदे दशवर्षीयं हल्लं नियोक्तुं बद्धपरिकरः'–सा कथमप्यवदत्।

'क इव ममापराधः' तीव्रस्वरमपृच्छदजातशत्रुः।

'तत्तु···अहमेव···तन्मुखाच्छ्रोतुमेतावत्कालपर्यन्तं नाशक्नवम्'- अवदत्तस्य माता। 'प्रातिकूल्यं शनैः शनैर्लभमानां तत्रत्यां परिस्थितिं प्रतिपलमनुभवन्त्या मयाऽनेकवारं–कदाचित् साश्रु कदाचित् सोद्वेगं कदाचित् सक्रोधं कदाचित् सदैन्यं

CC-0 Pulwama Collection. Digitzed by eGangotri

पृष्टोऽपि स तव पिता मत्समीपे नैकदाऽपि स्पष्टतया प्रकटीचकार तत्कारणं यद्वशात् स त्वद्विषये, स्वज्येष्ठतमपुत्रविषये, क्रोधमौदासीन्यमुद्वेगं च मनसि कुर्वन्निव…एभिस्त्रिचतुरैर्वर्षैः विशेषतो…मयाऽलक्षि। तस्य मनोवस्थाया वैपरीत्यस्य वास्तविकं कारणं तन्मुखादृज्ञातुमपारयन्त्या मया निगीर्य स्वाभिमानं स्त्रीस्वभावसुलभमुररीकृत्य दैन्यं साश्रु सपत्नी कोशलदेव्यपि…'मगधराजपरमविश्वासाऽऽस्पदं सा' इति मनसिकृत्याऽनेकदाऽनुरुद्धा, वारं वारं प्रार्थिता। परन्तु-साऽपि, जानत्यपि तत्, कदाचिदपि, मामिंगितेनाऽपि व्यञ्जनयाऽपि, नासूसुचत्।'

'एतादृशं वास्तविकं कारणं किञ्चित् खल्वस्ति'–एतदेवाहं विनिश्चेतुं नाशक्नवम्…एतावत्कालपर्यंन्तम्।'

'काल्पनिककारणसमुद्भूतमेव तव विषये तव जनकस्यैतदौदासीन्यं…अयं समुद्वेगः…अयं क्रोध…' इति तर्कयामि।'

'एता हि दुर्भावनास्तस्य मया चिराय खल्वनुभूताः।… सुनिपुणं स्मरामि तं दिवसमधुनाऽपि, व्यतीतेष्वपि दोर्धदीर्घतमेष्वेतेषु त्रिंशद्वर्षेषु। स्मराम्यधुनाऽपि समग्रेऽपि मागधराज्ये क्रमशो वर्धमानेषु त्वज्जन्ममहोत्सवेषु परां काष्ठां प्रपन्नेषु, मगधराजः, समुल्लास एव मूर्तिमान्, महाराज्ञ्या कोशलदेव्या मगधयुवराजप्राप्तिप्रमुदितया यवीयस्या च कौतूहलोत्फुल्लनेत्रकमलया पच्छामुखरया कौतुकचञ्चलया पद्मावत्या सह शुभे दिने शुभे नक्षत्रे त्वन्मुखकमलप्रथमावलोकनमहोत्सवार्थं तस्मिन् सूतिकागृह आगत आसीत्। सूतिकापर्यङ्कमुपसृत्य श्रान्तां हृष्टां मां स्निह्यन्त्या दृष्ट्या बहु बहु अभिनन्द्य मम समीप एव सुखं प्रसुप्तस्य तव सुकोमलरल्लकाऽऽवृतस्य मीलितनयनं मुखमवलोक्य हर्षमुखरो, यत्किञ्चिदपि वात्सल्यमधुरं बहु बहु जल्पन्, चिरं स्थित आसीत्। अन्ते च-प्रसुप्तस्यैव तव यवीयसि मणिबन्धे रत्नकङ्कणमाबध्य, अनिच्छन्नेव, 'मम निर्बलायाः श्रमोऽधिकतरो मा भूदिति ततोऽपगत आसीत्…आश्वासयन् मां 'आवयोरयं पुत्रको महान् चक्रवर्ती… महान् सम्राट् भविष्यति…नास्त्येवात्र संशयः। श्व एवाहं राजकीयं ज्योतिर्विदमाह्वास्यामि। आवयोः पुत्रकस्य जन्मपत्रिकां कारयिष्यामि तेन। तन्मुखाच्च तत्फलितं ज्ञात्वा त्वां स्वयं निवेदयिष्यामीति'।

'परन्तु-न जाने किं तदनन्तरं घटितं सर्वथाऽप्रत्याशितम्। तव पित्रा न तदाश्वासनं परिपालितम्। श्रुतं मया सूतिकागृहे-यदपरेद्युरेव मगधराजेन राजकीयः ज्योतिर्विद् भविष्यद्दर्शी सादरमाहूतो महाराज्ञीसमक्षमेव च पृष्टः। परन्तु तेन तव जन्मपत्रिकामधीत्य कीदृशी भविष्यद्वाणी समुदीरिता तत्त्वहमद्य-

CC-0 Pulwama Collection. Digitzed by eGangotri

पर्यन्तं न जानामि। 'तव किमपि घोरमनिष्टं भविष्यद्गर्भे पिहितं स्यादि'त्याशंकाऽऽकुलया मया मगधराजो वारं वारमस्मिन् विषये पृष्टः। महाराज्ञ्यपि···अनुनीताऽसकृत्। परन्तु-ताभ्यामुभाभ्यामप्यहमनृतैराश्वासनैर्वञ्चिता एव।···ज्योतिर्विदा तेनानिष्टाया घटनायाः कस्याश्चित् पूर्वसूचना ताभ्यां प्रदत्तेत्यत्र तु न संशयः। यतो हि नातिचिरादेव तदनन्तरं जनकेन तवाकथयित्वैव मां किमपि कारणमेकोऽनिष्टग्रहशान्तियज्ञ आयोजित आसीदुद्विग्नचित्तेन।'

'परन्तु-अनुष्ठितेऽपि तस्मिन्, तव पितुः स निष्कपटः नैसर्गिकः समुल्लासः, सः त्वद्विषयकः सहजः स्नेहो, यो विलयमात्यन्तिकं गत आसीत्, न कदापि पुनरधन्याया ममानुभवविषयीबभूव।'

'प्रत्युत-यथा यथा त्वं शुक्लेन्दुरिव वृद्धिं सर्वान्तःपुरिकाजनमनोहारिणीं कौतुककारिणीमभजस्तथा तथा तव पितुस्त्वद्विषयिणी मातृहृदयमात्रवेद्या सा ···अनुदारभावनाऽपि वृद्धिमेवाभजत्।'

(सनिःश्वासं) जानुभ्यां क्रममाणो विशालानि कक्षान्तराणि, स्नेहमुखरोपमातृहस्तमवलम्ब्य प्राथमिकानि पदान्यस्थिराणि क्षिपन् अस्पष्टाक्षरं किमपि किमपि वक्तुं प्रयतमानः, लालाक्लिन्नचिबुकः··· स्मेरमुखो वत्सः···न कदाऽपि तेन सकौतुकं समुत्क्षिप्तः, सस्नेहं वक्षसि धृतः, साभिमानं वाङ्के गृहीतः।'

'यथा यथा वत्सः, समतिक्रम्य मुग्धां बाल्यावस्थां, कैशोर्ये सुलभचाञ्चल्ये पदं न्यसितुं प्रचक्रमे तथा तथा तस्य त्वां पाषाणकठोरेऽनुशासने आबद्धुमिवेच्छा प्राबल्यमभजत।'

'अभिनिवेशेनेव स त्वां···सन्मार्गानुसारिणं गुणगणमण्डितं राममिव पित्राज्ञानुसारिणं विधातुं प्रयत्नमहर्निशमकरोत्। साधारणमपि···कैशोर्यसुलभमपि तवोद्दण्डमाचरणमवलोक्य कल्पान्तमिवाऽऽसन्नं कल्पयन्, कठोरतरानुपायानवलम्बे। मां, तव जन्मदात्रीं, न कदापि परामर्श। तव ज्येष्ठां मातरं पृष्ट्वैव तांस्ताननुशासनोपायानन्वतिष्ठत्।'

तक्षशिलाविद्यापीठसदृशेऽतिदूरे गुरुकुले विद्याऽध्ययनार्थं किल त्वामकस्मात् प्रेषयता तेनाहमस्पष्टमपि न पृष्टा परामृष्टा वा। अपि···अपि तु पद्मावतीमाता ···एव।'

'विद्यापीठ एकाग्रचित्तेन तास्ताः कलाः विद्याश्चाभ्यस्यतोऽपि तव विषये स कदापि समाश्वस्तचित्तो नासीत्। अपि तु-तव सुलभकोपमधीरं स्वभावमेव सततं मनसि कुर्वाणस्त्वां गान्धारदेशनृपमाध्यमेन चारचक्षुषा च प्रत्यहं निरीक्षाञ्चक्रे।'

CC-0 Pulwama Collection. Digitzed by eGangotri

'तवभगिन्याः पद्मावत्या विवाहेऽपि त्वां विद्यापीठान्नानाययत्···अवधी रयन् मम सास्रां प्रार्थनाम् ।'

'अहं तु मन्येयदा त्वं पितुराज्ञां दाशरथिवत् शिरसि कृत्वा तक्षशिलायां पांसुलपादविद्यार्थिवदध्ययनमात्रनिरत आसीस्तदाऽपि स भाविनि काले स्वोत्तराधिकारिपर्यायान् स्वात्मनैव परीक्षाञ्चक्रे।···अन्यथा-का खल्वावश्यकताऽऽसीद्राजकीयस्नेहसम्बन्धदृढीकरणमिषेण मद्रदेशनरेशकन्यां स्वकन्यासमानवयोन्वितां परिणेतुम् ?···(सोद्वेगं) कियान् खलु स हृष्ट आसीत् हल्लवेहल्लयोः जन्म वार्त्तामुपलभ्य ?···यदा खलु त्वं (विद्या) वनवासात् स्वगृहं प्रत्यागन्तुं प्रवृत्तस्तदा स तव शस्त्रनैपुण्यं शास्त्रवैदग्ध्यं च विद्यापीठेऽर्जितं भूयो भूयः प्रशंसन्नपि···तव सुलभकोपनस्वभावविषये साशंक एवाऽऽसीत् । प्रत्यागतं त्वां जनापवादपरिहारार्थं कथञ्चिद् यौवराज्येऽभिषिच्यापि स राजगृहात् त्वां दूरीकर्तुमिव पुनरिहास्याङ्गदेशस्य प्रधानशासकत्वेन सम्प्रेषितवान् ।'

ऐकाग्र्याकुञ्चितचक्षुरजातशत्रुः लोहमूर्तिरिव निश्चलः, प्रस्फुरदुच्छूननाडी भीषणभालफलकः जनन्या इममान्तरिकवेदनोद्गारमश्रुतपूर्वसदृशं शृण्वंस्तथैव तस्थौ ।

'एतां हि तव जनकस्य दुर्भावनामेतानि त्रिशंद्वर्षाणि प्रतिपलमनुभवन्ती ···अहमधन्या···कदाचित् 'पित्तोपहता शशिशुभ्रं शङ्खमपि पीतं पश्यामि'। ···तथाप्यहं दृढं संशये यदसत्यपि प्रबले कारणे तव नैसर्गिकान्मगधराज्योत्तराधिकारत्त्वां दूरीकृत्य तत्स्थाने बालकं हल्लं स्वोत्तराधिकारित्वेन,···स्वदेहपातदशायाम् तस्य-अल्पवयस्कत्वेन-कौशलराजं तत्पालकत्वेन चोद्घोषयितुं प्रवृत्त इति'।

'परंत्वज', अवदत् वैशाली, संक्रामयन्ती भावनावेगातिशयशुष्कां स्वदृष्टिं खेदजड इव मन्दालोके निश्चले रत्नदीपे, 'तवाऽपि दोषः···अस्ति···अत्र। ···व्यवहारो वा दोषकल्पो य एतादृशीं परां काष्ठामारोहयत् त्वज्जनकस्य प्रतिकूलां भावनां चिरप्ररूढाम् ।'

'मया खलु, मगधराज्ञोमहाराज्ञ्या वा सङ्कल्पपरिवर्तकारणं यथार्थं लेशतोऽपि ज्ञातुमपारयन्त्या, निगीर्य स्वाभिमानं चतुरा परिचारिका एका महाराज्ञ्याः क्रीता द्रव्येण'।

'तस्याश्च माध्यमेन मया ज्ञातं यत् पूर्वग्रहदूषितचित्तोऽपि तव जनको यौवराज्याभिषेकानन्तरं सत्यमेव त्वां स्वोत्तराधिकारित्वेन द्रष्टुं प्रववृते। प्रभावित एवासीत् स द्वादशवर्षानन्तरं विद्यापीठात् प्रत्यागतस्य वत्सस्य प्रभविष्णुना व्यक्तित्वेन संयमपूर्णेन व्यवहारेण च'।

CC-0 Pulwama Collection. Digitzed by eGangotri

'स्वप्रासादे त्वां प्रत्यहं साक्षात्कर्तुमसमर्थस्यापि तस्य, त्वामस्मिन् प्रदेशे सम्प्रेषयतः, 'प्रशासनकलानुभवलाभोऽपि भवतु नामे'ति सदिच्छाऽपि प्रेरिकाऽऽसीत्'।

'प्रशासनकालस्य प्रारम्भे त्वयैव नियमितरूपेण सम्प्रेष्यमाणैरत्रत्यैः कार्यप्रगतिवृत्तान्तैरादर्शवादोद्भासितैः सोत्साहैः सः प्रभावितोऽपि समभवत्। सामान्यजनसम्पत् स्थितेरुन्नयनार्थं त्वयाऽनुष्ठीयमानान् विविधानुपायानपि सः सकौतुकमश्रृणोत्। लुब्धानां कर्तव्यविमुखानामप्रामाणिकानां राजपुरुषाणां शासनमपि तव सोऽनुमेने। रक्षकविभागपुनर्घटनमपि तव सोऽनुमुमुदे। शिक्षाप्रसारप्रयत्नानपि, तव स बह्वभ्यनन्दत्'।

'परन्तु यतः प्रभृति त्वं तत्स्थापितामत्रत्यां मगधसैनिकबहुलां सेनां भङ्क्त्वा तस्याः स्थाने तीक्ष्णबलां सुनियन्त्रितां कठिनतमकार्यक्षमामङ्गदेशीयप्रायां नवीनां सेनां निर्मातुमारभिषे···ततः प्रभृति तस्य मनश्चिरकालिकेन तेनैव पूर्वग्रहेण, ग्रहेणेव पापेन, प्रबलतरवेगेन ग्रसितुमारभत'।

'तदनन्तरं तु नैकदाऽपि तस्य चित्तं त्वद्विषये नैर्मल्यमलभत। क्रमशो विरलीभवतो ह्रस्वीभवतश्च कार्यप्रगतिवृत्तान्तान् तव समवलोक्याधिकतरमेव-संशयग्रस्तस्तव विषये बभूव, स्वपुत्रस्य विषये त्वद्गतिविधिवृत्तान्तसङ्कलनार्थं गूढान् पुरुषांश्च न्ययुङ्क्त तेषां माध्यमेन शनैः शनैरुपलभ्यमानैस्तव नवीनतरगूढतराऽऽयुधनिर्माणोत्साहवृत्तान्तैश्चारबलघटनसमाचारैश्च सोऽधिकाधिकमेव समुद्विग्नोऽभवत्'।

'द्विजिह्वान् तव चारांश्च तत्र···राजगृहे···राजप्रासादे···साक्षादन्तःपुरे कार्यरतान् विज्ञाय तस्योद्वेगस्तु परां काष्ठामधिरुरोह।'

'पर्यणमत च तस्याऽऽकस्मिके कटुनिश्चये पूर्वोक्ते।'

'यदा त्वहं, मन्दभाग्या, तस्य तं भीषणं निश्चयमश्रृणवं तदा क्षणमात्रं हतबुद्धिरात्मानमात्मनैवावलम्ब्य, येन केनाप्युपायेन तव हितं रक्षितुमातुरा, विधूय संयमं, महाराज्ञ्या अन्तःपुर एव सततं क्लृप्तनिवासस्य दुर्लभदर्शनस्य तस्य समीपेऽगच्छं, श्रृण्वत्या एव मम सपत्न्या अन्यत्र व्यावृत्तनयनायाः, समाकर्णयन्तीनामेव निरुद्धश्वाससमुत्सुकोत्सुकानां पिहितद्वारकपाटतिरोहितानां क्षुद्राणामान्तःपुरिकाणां, तत्पादयोरपतं, तदनुग्रहं चायाचम्।'

'अश्रुक्लिन्नां दुःखविह्वलां प्रार्थनां मम नितान्तमवधोरयितुमसमर्थेन तेन चिरात् खलु समाश्वासिता—'यदि तव तनुजोऽधुनाऽपि स्वस्याऽऽचरणं न्याय्यं स्वमर्यादानुरूपं च विधास्यति तर्हि मगधराजसिंहासने तस्याधिकारोऽक्षुण्णः स्थास्यति। परन्तु···अन्तिम एवायमवसरस्तस्मै प्रदीयतेऽस्माभिरिति'।

CC-0 Pulwama Collection. Digitzed by eGangotri

'प्राप्य चैतदाश्वासनं, तेनानुज्ञाताऽहं राजगृहान्निर्गत्य तव समीपमागता'। 'तत्-समाकलय्य भाविनीं विपदं, स्वात्मनः नैसर्गिकस्याधिकारस्य रक्षणार्थं बद्धपरिकरो भव।'

'शृणु मम हितवचनम्। परित्यजाहंभावं विनाशकरम्, कुरु मगधराजं प्रति स्वं व्यवहारं विनयनम्रम्। पिता हि तव सः, अनुदारोऽपि पिता पितैव। वर्तस्व मगधराजवशंवद-प्रादेशिकप्रशासकवत्, न स्वतन्त्राङ्गदेशनरेशवत्।'

'मा मनसि कुरु कल्पनामणीयसीमपि मगधराजेन सह संघर्षस्य सशस्त्रस्य। यौवनसुलभेनोत्साहेनाऽऽत्मानं बलाढ्यतरं योग्यतरं कुशलतरं च मन्यमानोऽपि स्वल्पेनैव समयेन शलभगतिं लप्स्यसे समवेतानां मगध-कोशल-मद्र-वत्ससेनानां क्रोधवह्नौ।'

'उक्त्वा चेत्थं, साऽऽसनात् कथमप्युत्थिता सन्तापशुष्कस्वरा भावातिरेकप्रज्वलन्नेत्रकमला संततभाषणपरिश्रान्तादेहा नु मातृहृदयवेदना-विससर्ज स्वं पुत्रम्। शय्याभिमुखी च बभूव···अकालवार्धकमंथरया गत्या।

CC-0 Pulwama Collection. Digitzed by eGangotri

## अष्टमः परिच्छेदः

एवं विसर्जितश्चिन्तातुरया जनन्याऽजातशत्रुरेकमप्यक्षरमनुच्चार्य, स्तोकमप्यनाश्वास्य खिन्नां तां लेशतोऽप्यप्रकटय्य स्वमनोगतं, ततो निर्गतो विचारमग्नोऽनभिज्ञः सेवकानां कौतूहलपरवशानां दृष्टिक्षेपाणामतिक्रम्य मन्दप्रदीपाऽऽलोकानि परिजनशून्यानि नीरवाणि सुखप्रसुप्तानीव कक्षान्तराणि, स्वशयनकक्षं प्राविशत् ।

अकृतवेषपरिवर्त एव शय्यायाममृतफेनधवलायांसुखदायां मन्दसुमनोमोदवासितप्रच्छदायामात्मानं वात्योन्मूलितं महावृक्षमिव तरुणमक्षिपत् ।

परन्तु कतिपयक्षणानन्तरमेवाशक्नुवन् सोढुं विचारोल्लोलकल्लोलाऽऽघातान्, तत उत्थाय पूर्वाभिमुखशयनकक्षवातायनमुपगम्य, ततो बहिरतिदूरावस्थिताः मन्दे तारकालोकेऽस्पष्टतयाऽकालकालमेघमाला इव प्रलयायोदीयमानाः कमपि पापसङ्कल्पं गूढं मनसिकृत्य निश्चला इव विभाव्यमाना अचलपङ्क्तीरन्यमनस्कतयैव विलोकयन् मूर्तिरिव तस्थौ ।

अशान्तचित्ततया तत्रापि चिरं स्थातुमसमर्थोऽन्यमनस्कः, शयनकक्षान्निर्गत्य, यन्त्रचालित इव प्रेर्यमाण इव केनाप्यदृश्येन मानवेन, अभ्यासवशादेव, प्रासादान्निर्गतः समीपवर्तिनीमश्वशालामुपससार ।

तत्रत्येन चाऽश्वपालकेन निद्राजडनयनेन शिथिलगात्रेण खट्वानिपतितेनाऽकस्मात् पुरतोऽवस्थितं कठोरतरमुखमुद्रं कृष्णतरवर्णं स्वामिनं—मन्दे नैशआलोकेऽमानवमिव कमपि भयङ्करेणोद्देश्येन सर्वव्यापिनस्तमःसागरादुद्भूतं परिभासमानं-समवलोक्य विलुप्ततन्द्रेण विदित्वा तदभिप्रायं, तस्मिन्नेव क्षणे सेवायां समुपस्थापितं चिरपरिचितं परमविश्वासपात्रं, विलोक्य स्वामिनं परमहृष्टं तुरङ्गममारुह्य, एकाकिन्या युवराजमातुरागमनमाकस्मिकं चर्चयतामुदग्रमुखाकृतिरक्तनयनं तं तस्मिन् मध्यरात्रे तथा बहिर्गच्छन्तमवलोक्य हठाद्विरतालापानां दक्षाणां भयस्तब्धानां किमपि महदनिष्टमासन्नप्रायमनुभवतां महाद्वाररक्षकाणां प्रणतीः ससंभ्रमा अवधीरयन्नेव, सः प्रासादप्राकारमहाद्वारान्निर्जगाम ।

अतिक्रम्य च मन्दप्रकाशानि जनशून्यानि स्तब्धानि निद्रितग्रामसिंहानि रथ्या-

CC-0 Pulwama Collection. Digitzed by eGangotri

तराणि, विजहौ पश्चान्नातिचिरादेव तच्छासनच्छत्रच्छायायां विश्रब्धं प्रसुप्तां चम्पानगरीम्।

प्रवस्तुं चारभत राजधान्या बहिर्यायिना शस्यसम्पच्छालिक्षेत्रनिबद्धोभयपार्श्वेन-वृक्षपङ्क्तिनिबिडतरान्धकारेण मार्गेण, यदृच्छयेव गृहीतोत्तरदिक्।

शनैः शनैश्च नैशसमीरसुखदसंस्पर्शन्यूनीभवदुद्वेगातिशयोऽनुजानन् तुरङ्-गमं स्वेच्छया गन्तुमविदन् तस्य क्रमं लक्ष्यं वा, परित्यजन् स्थलकालविचारं, चिन्तयितुमारभत—

'एवमेतत्! एवमेव विपरिणमन्तेऽस्मिन् क्षुद्रे मानवसमाजे सर्वक्षेमकरमु-दात्ततमं ध्येयमुररीकृत्य निःस्वार्थभावेनानुष्ठिता अपि कार्यकलापाः।'

'मया हि, तक्षशिलासदृशे सुविख्याते विद्यापीठेऽपि ख्यातिंगतेन, यौवराज्य-पदेऽभिषिक्तेन, विस्मृत्य नयने संतापाऽऽरक्ते जनन्या मम पुनर्निष्कासनवार्त्तां निशम्योद्वेल्लितायाः, विजित्यापमानभावनामवधीर्य मानसिकसन्तापं दूरीकृत्य रणरणकमीडामस्याविकसितस्यारण्यप्रायस्योपेक्षितस्याङ्गदेशस्य प्रशासकपद-मङ्गीकुर्वता, प्रदेशस्यास्य सर्वाङ्गीणं विकासं कृत्वा स्वपितरं प्रकृतिकातरं दीर्घ-शङ्किनं समाश्वासयितुं बद्धपरिकरेण न मनसि कृतः परिश्रमः, न चित्ते धृतः खेदः, न गणितः कष्टः।'

तस्य सर्वस्य चैतत् फलमुपलब्धं—वंशपरम्परासिद्धान्मगधसिंहासनाधिका-राद् प्रभ्रंशनरूपम्!'

'मया खलु (विषण्णं विहस्य) चिन्तितमासीत्—मगधराजो मामविवेकिन-मधीरं कोपिष्ठं मन्यमानो न बहु मन्यते। मयि पैतृकं मगधराज्यभारं न्यसितुं नोत्सहते। मां स्वनामधन्यस्य भट्टीयमहोदयस्य राजवंशप्रस्थापकस्य मनोरथानां परिपूरणेऽसमर्थं मन्यते। तदहमस्य प्रदेशस्य सर्वाङ्गीणां समुन्नतिं स्वप्रशासनमाध्य-मेनाचिरादेव सम्पाद्य तं दर्शयिष्यामि यदापतिते खलूत्तरदायित्वे क्षमतानुरूपेऽह-मपि विवेकी धीरः संयमशीलश्च भवितुं क्षम इति। अत एव मयाऽस्य प्रदेशस्य सर्वांगीणविकासार्थं प्रयतितम्।...स मम मनोरथः...स मम सङ्कल्पः...स मम प्रयत्नः सुफलमित्थम्प्रकारकं प्राप्तः।'

'अथवा—सर्वमेतदवश्यंभाव्येवाऽसीत्। प्रत्युत, यदि मगधराजो मम प्रयत्नानिमान् दृष्ट्वा प्रसन्नोऽभविष्यत् तर्हि तदेवास्वाभाविकमाश्चर्यप्रदं चाभवि-ष्यत्। यथाऽऽह माताऽद्य—स आजन्मन एव मम विषयेऽनुदारहृदयः। न जाने कारणम्। परन्तु—शैशवे बाल्ये कैशोर्ये यौवने, सर्वास्वप्यवस्थासु, मया जानता-ऽजानता वा समक्षं परोक्षं वा सदैव स मां प्रति साशङ्क इव, मयि अविश्वसन्निव, मत्तो बिभ्यदिव...मत्तो बिभ्यदेवालक्षि। तस्य वृद्धस्य सामन्तध्रुवस्य दण्डधारण-

CC-0 Pulwama Collection. Digitzed by eGangotri

रूपिणीं क्षुद्रां घटनां निमित्तीकृत्य मां राजगृहादतिदूरस्थे तक्षशिलाविद्यापीठे निर्वासितवान्। तत्र चारचक्षुभिः मां रिपुमिव निभृतं निरीक्षाञ्चक्रे। ततश्च निष्कलङ्कं प्रत्यागतं मां यौवराज्ये, यथाऽऽह जननी, जनलज्जयाऽभिषिच्याऽपि मम तत्समक्षमुपस्थितिं दैनिकीं सोढुमसमर्थः, शीघ्रमेव तदनन्तरमेतद्देशप्रशासन-भारवहनार्थं किल प्राहिणोत्। अविश्वसन्नेव मयि, मां स्वीयैः परमविश्वासपात्रै-रधिकारिभिरादित एव परिवेष्टयितुमचेष्टत।'

'यतः प्रभृति त्वहं, अजानन्नेव तस्य कपटजालं, मूढ इव, नवनिर्माण-समुत्साहप्रेरितस्तदीयामत्रत्यां सर्वामेव नागरिक-सैनिकाऽऽर्थिकव्यवस्थां दोषजर्जरां भङ्क्त्वा तत्स्थाने नवीनां व्यवस्थामारोपयितुं चेष्टामकरवं ··· ततः प्रभृति तस्याविश्वासः, स्वाभाविकतयैव परां काष्ठामारुरोह।'

'यत्त्वाऽऽह जननी-मां गूढसैनिकयन्त्रनिर्माणरतं स्पशजालप्रसारणपरं च विज्ञायैव स मत्प्रतिकूलो बभूवेति···तत्तु मन्ये—पातिव्रत्यभावनाप्रेरिताया-स्तस्या ऐच्छिकमेव···कपोलकल्पितमेव।'

'असत्यपि मयि नवीनसंहारयंत्रनिर्माणरुचौ उन्मीलितचारचक्षुषि च स येन केनापि मिषेण येन केनापि निमित्तेन मां मम साहजिकादुत्तराधिकाराद्-वञ्चयित्वा हल्लाय तमदित्सत।'

'यथाऽऽह माता—मगधराज्यस्यायं वैकल्पिक उत्तराधिकारी तेन चिरात् खलु वांछित आसीत्। अत एव-तेन स्वपुत्रीसमवयस्का···क्षेमा···जराजर्जरगात्रेण-परिणीता···प्राणप्रियां कोशलराजभगिनीमक्षमां मज्जननीं चैतदर्थमयोग्यां परि-लक्षयता।'

'कियान् प्रियो हल्लस्तस्य! प्रकृतिदुर्बलमपि तमतिलालनदुर्विनीतमपि तं बहु मन्यते। नतं पितामहमनोरथपूरणसामर्थ्यलाभाय राजगृहाद्दूरे कस्मिंश्चिदपि विद्यापीठे प्रेषयितुं उत्सहते। प्रत्युत विविधशास्त्रपारंगताननेकान् पंडिताननेकान् विविधशस्त्रकलाकोविदो वीरांश्च राजकीयसेवायां नियुज्य तेभ्य एव पाण्डित्यं शस्त्रनैपुण्यं चाधिगन्तुं तं प्रोत्साहयति। वार्धकपलितबुद्धेः पितुः पतिमनोरथाभि-ज्ञाया मातुश्च कौतुकमवधार्य स तदर्थं नोत्सहत इति त्वन्यदेतत्।'

'एतस्यां परिस्थितौ किं नु कार्यम्? यत्तु चिन्तातुरया मात्रा समुपदिष्टं —अनुकूलवर्तनेन मगधराजो वशीकरणीय इति—तदनुसृत्य वर्तमानोऽहं (कटु विहस्य) नूनं सिकताभ्यस्तैलं लब्धुं समर्थः स्याम्। भूयान् समयः परिश्रमश्च, मया एतदर्थं प्रयतमानेन विनाशितः।'

'नाहमेतादृशीं त्रुटिं पुनः कर्तुमुत्सहे।'

CC-0 Pulwama Collection. Digitzed by eGangotri

'अहं मम जन्मसिद्धमधिकारमन्येन केनापि, भ्रात्राऽपि, लुण्ठितं, कण्ठगतेष्वपि प्राणेषु, न मर्षिष्ये। (सोद्वेगं) कापुरुषस्यैवैतच्छक्यम् । तत्—यदि मम पिता पूर्वग्रहविपरीतदृष्टिर्मम यां कामपि चेष्टां तदुन्मूलनमात्रलक्ष्यप्रेरितां मन्यते, तर्हि तत् तथैव भवतु…इतः परम् ।'

'इतः परमहमपि स्वाधिकारसम्पादनैकलक्ष्यः सूक्तानसूक्तान् यान् कानप्युपायान् प्रयोक्ष्ये ।

'यथाऽऽह स, विषयजर्जरितदेहोऽपि तीक्ष्णमतिः, कोशलयुवराजः, जगत्यस्मिन्, न कोऽपि स्वाधिकारं स्वप्रभुत्वं स्वेच्छया संन्यस्यति । तत्तु बलादपहरणीमेव भवति ।

'प्रदर्शितमेवैतच्छूरेण, मयेव विलम्बासहिष्णुना, मयेव महत्त्वाकाङ्क्षिणा, मयेव भव्यमनोरथेन पितामहेन भट्टीयमहोदयेन पितृनिर्विशेषं विश्वसन्तमपि तद्वशंवदमपि स्वामिनं, दुर्बलं तं बार्हद्रथं राजानं रिपुञ्जयं प्रसह्य सिंहासनाद्दूरीकृत्य तत्स्थाने स्ववंश्यं स्थापयता ।'

'तत्-स्वाधिकारो बलादधिगन्तव्यः । मगधराजश्च बोधनीयो यत्तस्य पुत्रः न नपुंसको, यः स्वाधिकारं जन्मसिद्धमन्यस्मै प्रदीयमानमवलोक्याश्रुपूर्णनयनस्तूष्णीं तिष्ठेत् हताशः ।'

'…भाविन इतिहासकारा मां पितृद्रोहिणं घोषयिष्यन्ति । घोषयन्तु नाम यथेच्छम् ।…किं तैः कापुरुषैः ?'

'मगधराजसिंहासनमारुह्य शस्त्रबलेन बुद्धिपाटवेन चाहं यत्तत् क्षुद्रं राज्यं महत्तमे भारतीयसाम्राज्ये परिवर्तयिष्यामि तदपि तु तेऽवलोकयिष्यन्त्येव ।

'पितृद्रोहिणमपि…समर्थं प्रशासननिपुणं रणचतुरं महान्तं सम्राजमेव ते मां घोषयिष्यन्ति ।'

'निन्दन्तु ते…स्तुवन्तु वा। अहं तु मम कृते नियत्या सर्वतन्त्रस्वतन्त्रया निर्धारितपूर्वं राज्यमधिगमिष्याम्येव ।'

'नियतिरेव मामाह्वयत एतदर्थम् ।'

'तत्—कथं स्वाधिकारोऽधिगन्तव्यः ?…किं बलेन ? न तावद्बलेन । ममेयं सेना, नवीनतया निर्मिताऽपि दक्षाऽपि रणकलादीक्षिताऽपि न पर्याप्ताऽद्यापि तदर्थम् । एतस्यां हि प्रयुज्यमानायां, साक्षात् पुत्रं पितरं सिंहासनाद्भ्रंशयितुमुद्यतमवलोक्य धर्मप्राणानां दाशरथिभक्तानां मागधप्रजाजनानां महांश्चित्तक्षोभो भवेत् । सुखप्रशासिता अप्येता अंगदेश्याः प्रजा अपि मद्विद्रोहं कुर्युः ।'

CC-0 Pulwama Collection. Digitzed by eGangotri

'यथाऽऽह च जननी – मगधकोशलवत्समद्रसेनानामेकीभूतानां प्रचण्डे क्रोधवह्नौ ममेयं सेनाऽचिरादेव शलभगतिं प्राप्स्यति ।'

(किञ्चिद्विचार्य)'···अहो ! एतदेवाभीष्टं मगधराजस्य । तेन खलूत्प्रेक्षितं यज्जननीमुखात् विदित्वा सर्वमेतं वृत्तान्तमहं, तन्मतेन साहसिकः, समुत्तेजितोऽवधीर्यविवेकं, सुलभकोपोऽक्त्वैव बलाबलविवेकं, तं ससैन्यमाक्रमेय, बहु मन्यमानो मूर्खतया स्वसामर्थ्यम् । तथा च सति—सर्वसमक्षं कठोरतया दण्डनीयः स्यामिति ।'

'अहो धूर्तता···मगधराजस्य ।'

'अथवा—युज्यत एव सा तत्सदृशस्य कपटकुटिलस्य ।'

'परन्तु—एतत्तेन नोत्प्रेक्षितं यदल्पवयस्कोऽपि शीघ्रकोपोऽपि सांसारिकानुभवहीनोऽप्यहं न तथा सहसाकारी यथाऽऽपाततः परिलक्ष्ये,···यदहमपि जगतः कुटिलान् व्यवहारान्—सत्येव समये –प्रत्यभिज्ञातुं प्रतिकर्तुं च क्षम इति ।'

'तत्—पितृपादानां कुटिला व्यवहाराः कुटिलैरेव व्यवहारैः निराकरणीयाः । मया खलु मातुर्मुखान्मगधेश्वरस्य कोपस्य वार्तां निशम्य नितान्तं भीतमिवाऽऽत्मानं नाटयता, आदौ तावत्······'

विचारयन्नेवेत्थं स अकस्मात् भालप्रदेशे संघट्टितं किमपि कठिनमनुभूय, द्वितीय एव क्षणे समुद्भूतया तीव्रया वेदनया विचारतन्द्रायाः प्रबोधितः, 'कुत्र खल्वानीतोऽहमनेन प्रभञ्जनेन'—इति कौतूहलवशादितस्ततो दृष्टिमाकुञ्चितां व्यापारयन्, सूचिभेद्यसर्वव्यापितिमिरवशात् स्पष्टतया द्रष्टुमपारयन्नपि, स्वात्मानं नितान्तमपरिचिते निःस्तब्धेऽरण्यानीप्रदेशे क्षोणिनिर्झरकूले नातिप्रवृद्धस्य सर्वतः प्रसृतशाखस्य, अश्वत्थवृक्षस्य भयजडस्येव निष्कम्पपर्णसम्भारस्य, कस्यचिदधस्तात् तिष्ठन्तमवलोकयामास ।

अवलोकयामास च क्षणमात्रानन्तरं नातिदूरादागच्छन्तं कमपि पीतपीतं प्रकाशं क्षीणक्षीणम् ।

आहूयमानमिवाऽऽत्मानं तेन विभावयन्, तस्मिन्नेव क्षणेऽधोवतीर्य, निर्निमेषया विस्फारितया दृष्ट्या तमेव प्रकाशंध्यायन्तं भीत्येव कयाचित् सहसा समाक्रान्तं क्षणमात्रं निःस्तब्धमवस्थाय ततोऽन्यत्र गन्तुं सहसा प्रवृत्तं प्रभञ्जनं श्रमस्वेदार्द्रतनुं तस्यैवाश्वत्थस्यमूले बद्ध्वा, तं समुद्दिश्य प्रसर्तुमारभत···अवश आकृष्यमाण इव नियत्या···शनैः शनैः अपरिचितविषमभूमिस्खलद्गतिस्तन्मात्रनिबद्धदृष्टिः ।

CC-0 Pulwama Collection. Digitzed by eGangotri

## नवमः परिच्छेदः

यथा यथा च स अपरिचितविषमभूमितलस्खलद्गतिरवधीरयन् कर्णयोरकस्मादापतितं चित्तप्रकम्पकं दिवाभीतस्य कस्यचिदशुभसूचकं घूत्कारं, तिरस्कुर्वन् निद्राविचालितस्योद्विग्नस्य करेटोः कस्यचिन्नीडनिलीनस्य वाशितं, प्रतीपवाहिनो वसादुर्गन्धिनः कदुष्णस्य-निःश्वासस्येव कस्यचिन्महाप्रमाणस्य भयंकरस्य क्रूरस्य वन्यप्राणिनस्तदर्थमेव नातिदूरे तस्मिन् गहनेऽरण्यानीप्रदेशे कुत्रापि गूढं निलीनस्य समीरस्योद्वेजकमाघातं च, तदेकनिबद्धदृष्टिस्तमेव मन्दवातलहरीप्रकम्प्यमानं पीतं प्रकाशमुद्दिश्याऽग्रे ससार,—तथा तथा स गूढेन केनाऽपि दुर्वर्णनीयेनाकल्याणकारिणाऽमंगलेनाऽशिवेनाऽऽधिदैविकेन प्रभावेण क्रमश आक्रम्यमाण इव, रहस्यमयेन केनाप्यनुभवमात्रगम्येनानिष्टेन वातावरणेन प्रसह्य पराभूयमान इव दुर्निवार्याऽऽवेगेन दुर्भेद्येन फलोन्मुखेन केनचिदतीतपापकर्मजालेनाऽऽबद्ध्यमान इव, समुद्विग्नमपि प्रशान्तमिव भयाकुलमपि निर्भयमिवाऽऽशंकितमपि समाश्वस्तमिव पराधीनमपि स्वाधीनमिव दुःखभराक्रान्तमपि सुखजडमिवाऽनिर्वचनीयेन केनाऽपि राजसेनाऽऽनन्दातिरेकेणाऽऽपूर्यमाणमिव विनष्टचिन्ताभरमिव सामर्थ्यातिशयोपपन्नमिव त्रिलोकीविजयप्रभविष्णुमिव समस्तसृष्टिचक्रमध्यबिन्दुमिव सर्वातिशायिमहत्त्वयुक्तमिवाऽऽत्मानमनुभवितुमारेभे।

उपसृत्य च, ईक्षाञ्चक्रे, ऽरण्यानीगहनवृक्षिराजेः निर्गतस्तन्मध्यवर्तिनिर्वृक्षस्थानसीमाप्रदेश एव हठात् केनाप्यदृश्येन प्रभावविशेषेण निवारितप्रसर आश्चर्यविस्फारितरक्तलोचनो विस्मयशुष्यन्मुखः कौतूहलताम्यद्हृदयः समुद्भिद्यमानस्वेदबिन्द्वंकितभालपट्टो विलुप्तस्थलकालव्यक्तिविवेक, एकस्य घनतिमिरदुर्लक्ष्यविस्तारस्याऽपि विस्पष्टानुमेयाभ्रंकषशाखावितानस्यानेकशाखामृगकृतनिलयस्याप्यसंख्यखगकुलकृतनीडस्यापि समासन्नभीषणघटनापूर्वसूचनाभीतस्येव नितान्तनिश्चलस्य वहत्यपि शनैः शनैः नैशे समीरेऽकम्पमानपर्णस्य महतो वृद्धस्य कस्यचित् चिञ्चावृक्षस्य विशाले मूले मन्दं मन्दं प्रज्वलन्त्या मृद्दीपिकाया एकस्या निःसरन्तं तं प्रकाशम्।

स्तब्ध एव, ईक्षाञ्चक्रे च तत्प्रकाशितमनास्तृतायां भूमावुपविष्टं, कृष्णवर्णं, गृहीतमानवविग्रहमिव निशीथतिमिरखण्डं, नग्नप्रायशरीरं, श्मशानभूमि

CC-0 Pulwama Collection. Digitzed by eGangotri

विदीर्य स मुत्थितमासीनं च दुष्कर्माचरणाथ शवशरीरमिव कस्यचित् पापिनः प्रेतस्य, कृशतनुमप्यप्रत्याख्येयशक्तिविशेषं, प्रवृद्धधवलश्मश्रुजालदुर्लक्ष्यविशेषमुखमुद्रमपि सुलक्ष्यभीषणरक्तनयनं, जपव्यापृतमिव किंचिच्चलदधरोष्ठं, प्रत्यग्रसिन्दूरकृतरक्तरेखाभीषणांभ्रू मध्यं, ह्रस्वकायं, पुरोवस्थितं मृद्दीपिकाप्रकाशितसर्वविशेषं सद्यः पूजितमिव प्रत्यग्ररक्तचन्दनचर्चितं रक्तकुसुमार्चितं चिताभस्मरेखावलयमध्यवर्ति सद्यःकृतरुधिराभिषेकक्लिन्नतया संलग्नरक्तकुंकुमाक्षतं भीषण नरमुण्डं विदीर्य मुखं प्रसन्नतया हसदिव विहसदिव निःशब्दं निर्निमेषस्थिरया दृष्ट्या ध्यायन्तं, कञ्चित् कापालिकम् ।

ईक्षित्वा च क्षणमात्रमवतस्थौ मन्त्रमूढ इव विलुप्तचेतन इव ।

प्रेर्यमाण इव च निष्ठुरया यत्किञ्चित्कारिण्या नियत्या, चालित इव काष्ठपुरुष इव जगत्सूत्रसंचालकेन, कतिपयक्षणानन्तरमेव, तदेव लोमहर्षकं चित्तचुम्बकं भीषणहृद्यं स्थलमुद्दिश्याऽग्रे सर्तुं प्रचक्रमे ।

अग्रे सरंश्च, परवश इव, शुष्कपर्णपुञ्जस्यैकस्योपरि पदमजानन्नेवाकस्मात् न्यदधात् । बभञ्ज च सर्वतोव्यापिनीं श्मशानशान्तिन्तन्मर्मरध्वनिना क्षुद्रेणाऽपि तदानीं कर्णविस्फोटकेनेव भासमानेन ।

अपश्यच्च तस्मिन्नेव क्षणे तेन ध्वनिना समाकृष्टचित्तं परिवृत्य मुखं संमोहननिपुणयाऽऽरक्तया निर्निमेषया दृष्ट्या तमेवावलोकयन्तमकस्मादुपस्थितमपरिचितमपि तं तत्र तदा दृष्ट्वाऽप्यचकितं तं कापालिकं तमेव समुद्दिश्यातिपरिचितमिवेषद्हसन्तम् ।

शुश्राव च तं मन्दघर्घरयाऽस्पष्टवर्णयाऽसंस्कृतया वाण्या तमेव समुद्दिश्य गदन्तम्—

'एहि अजातशत्रो एहि । त्वदर्थमेव निजनेऽस्मिन् स्थानेऽद्य समुपस्थितोऽहम् । त्वदर्थमेव सर्वेप्सितप्रदायां मंगलायाममावास्यायामस्यां पूजामिमामकरवम् ।'

'चिरायितोऽसि नूनं नियतिसमादिष्टोऽपि ।'

'अद्य खलु सर्वतन्त्रस्वतन्त्रा भगवती नियतिस्त्वामाह्वयते ।

'शृणु...अजातशत्रो...शृणु तदाह्वानम् । स्वीकुरु च नतेन मस्तकेन तस्या आदेशम् । नियतिस्त्वां समग्रस्य भारतवर्षस्याधीश्वरं कर्तुमुत्सुकायते । स्वीकुरु विनम्रेण मस्तकेन तस्या आदेशम् । अंगीकुरु च तत्परिपालनायात्यावश्यकमाधिदैविकं दुष्प्रसहमतीन्द्रियशक्तिसाहाय्यम् ।'

'एहि...अजातशत्रो...एहि ?—इति ।

CC-0 Pulwama Collection. Digitzed by eGangotri

स्वभावत एवाऽऽधिदैविकीषु शक्तिषु परं विश्वसन्, आदित एवातीन्द्रियया कयाऽपि दुष्टया शक्त्या वशीकृतः, आदित एव लोमहर्षकेण तेन दृश्येनाभिभूतोऽजातशत्रुश्च तस्य कापालिकस्यै तयाऽस्पष्टवर्णयाऽपि मन्द्रघर्घरयाऽप्यप्रत्याख्येयप्रभावया वाण्या, कृष्णभुजंग इव मन्त्रशक्त्या, बलादाकृष्यमाणस्तस्य समीपे—मन्त्रचालितः प्रेत इव-तिरस्कुर्वन् योग्यायोग्यविवेकमवधीरयन् सदसद्विवेकमुपासरत्। उपाविशच्च निष्प्राण इव तत्समीपे शुष्यन्मुखः। निदध्यौ च तस्य विलक्षणस्य कापालिकस्य कृष्णवर्णमपि प्रवृद्धशुभ्रश्मश्रुजालमपि शुष्कमपि दन्तुरमप्यलौकिकदुष्टशक्तितेजोभासुरयोरारक्तयोः परसम्मोहननिष्णातयोः नयनयोः कारणाच्चित्ताकर्षकं विरम्य जपात् निर्निमेषस्थिरया दृष्ट्या तमेव-बलिपशुमिवाऽऽसन्नघातं ध्यायदाननम्।

पराभूत इव नितरामभिभूत इव तस्य तया तीक्ष्णया विषमिव वमन्त्या द्वेषमिव पाययन्त्या तामसं हर्षमिवोद्गिरन्त्या दृष्ट्या, क्षणमात्रानन्तरमेव, तस्याऽऽननात् प्रसह्यापमार्य निस्तेजस्कां दृष्टिं, कुत्सितमिव हसति स्वात्मीयभावेनेवाभिनन्दयति नरमुंडे तां बबन्ध।

अशृणोच्च क्षणमात्रानन्तरमेव पुनस्तामेव मन्द्रघर्घरां सोल्लासां परसंमोहिनीं वाणीम्।

'गृहाण···अजातशत्रो···गृहाण प्रसादमिमम्। तवैव कृतेऽद्य सविशेषमिह पूजिताया देवतायाः प्रसादमिमं गृहाण। अस्य सामर्थ्येन त्वं शरीरेण मनसा चापराजेयो भविष्यसि।'

'गृहाण···अजातशत्रो···गृहाण प्रसादमिमम्। अस्य प्रभावेण त्वमापातभयंकरानपि परिणामसुखदानुपायान् प्रयोक्तुं समर्थो भविष्यसि। अस्य बलेन त्वं मूर्खैः पाखण्डैः धूर्तैः स्तुतान् स्नेहपाशान् छेत्तुं शक्ष्यसि, छद्मवेषाणां प्रकटानां निर्बलानां सबलानां सर्वेषामेवारीणां मनोगतानि गूढान्यपि ज्ञातुं शक्ष्यसि। निराकर्तुं च तेषां स्वार्थान्धानां कपटकुटिलानुपायान् त्वद्विनिपातमात्रपरानेकाक्येव'।

गृहाण···अजातशत्रो···गृहाण प्रसादमिमम्। अस्य प्रभावेण त्वं धूर्तं कुटिलगतिं वञ्चनाचतुरं पितरं तं वृद्धं शृगालं···बिम्बसारं स्वात्मनः प्रगतिपथाद् बलादपसारयितुं शक्ष्यसि···तत्पितेव स्वस्वामिनम्। स हि तव भाग्योदयस्यैकमात्रप्रतिबंधकः। नहि सः स्वयमेव तवोन्नतिपथादपसर्ता। नियतिरेवाऽऽज्ञापयति त्वां तं हठाद्दूरीकर्तुम्। दूरीकृते च तस्मिन् तव भाग्योदयोऽवश्यमेव भविष्यति।'

'आरोक्ष्यसि चाचिरादेव विशालमागधसाम्राज्याधीश्वरपदम्'।

CC-0 Pulwama Collection. Digitzed by eGangotri

'अलंकरिष्यसि च शीघ्रमेव चतुःसमुद्रवलयांकितपृथ्वीपतिपदम्।

'लम्भयिष्यसि चेतिहासेषु ध्रुवं स्थानं स्ववंशम्। तदर्थमेव तु तव पितामहेन विश्वसन्नपि स्वस्वामी सः 'रिपुञ्जयो मृत्युमुखे हुतः···हाः···हाः···हाः।

'गृहाण···अजातशत्रो···गृहाण प्रसादमिमम्। नियतिस्त्वामाज्ञापयति। गृहाण। गृहाण।'

अजातशत्रुस्त्वादित एव समग्रे तस्मिन् घनतिमिरे वनप्रदेशे व्याप्तेन विलक्षणेनानिर्वचनीयेन पैशाचिकेन प्रभावेणाभिभूतस्तत्रापि निध्यातेनतेन लोमहर्षकेण पैशाचिकपूजादृश्येन प्रभावितस्तया चित्तसंमोहिन्या मन्दघर्घरया वाण्या वशीकृतः, निष्प्राण इव, यन्त्रचालित इव, तेन कापालिकेन कुस्मितभीषणमुखमुद्रेण प्रदीयमानमकालकालकवलितबालकधवलकपालविधृतं वसोग्रगन्धि कषायं किमपि द्रव्यं, झटिति, परित्यज्य सर्वं विवेकमाचामत्।

आचमनक्षण एव, जिह्वामिव दहता तालुमिव शोषयता कण्ठमिव विदारयता जठरमिव स्फोटयता तेन द्रवीभूतानलेनेव सर्वांगदाहकेन द्रव्येणापहृतचेतनः क्षणानन्तरं भूमितले न्यपतत् विलुप्तसंज्ञः।

चिराच्च संज्ञां पुनरलभत, नयनयोर्मृदुस्पृशद्भिर्विशालवृक्षपर्णसम्भारान्तरालनिपद्भिः नातितीव्रैः सुखदैः दिनकरकरैः, भालप्रदेशेऽस्पष्टं चुम्बन्तीभिः शीतलाभिर्विविधवन्यसुमनपरिमलवाहिनीभिः समीरलहरीभिः, मन्दं मन्दं कूजद्भिः निबिडतरुपल्लवसम्भारनिलीनैः खगैश्च, बोध्यमान इव सदयं सानुकम्पम्।

लब्धसंज्ञश्च स्थलकालव्यक्तिविशेषान् विनिश्चेतुमपारयन्, विषमभूमितले यथापर्वं निपतित एव, किसलयान्तरप्रविशद्रविकिरणनिबद्धदृष्टिः विस्मित आत्मानं पर्यवस्थापयितुमचेष्टत।

सहसा च स्मृतौ प्रादुर्भूतेन विगतरात्रिवृत्तान्तेन लोमहर्षकेण दग्ध इव दष्ट इव मर्माहत इव हठादुत्थातुं प्रचक्रमे।

जडीभूतदेहस्तु न सहसा शशाक।

महता कष्टेन दीर्घेण प्रयत्नेन समुत्थितश्च तन्द्राजडे म्लाने रक्ते नयने समन्ताद् व्यापारयामास।

दिगन्तव्यापि-क्षितिजचुम्बि-गहनवृक्षराजि-निबिडपर्णसंभारान्तरितं गगन मण्डलं सर्वतः प्रसृतहरिततृणांकुराऽऽस्तीर्णं भूतलं चावलोक्य रम्ये वनप्रदेशे कस्मिंश्चित् सुप्तोत्थितमात्मानमुत्प्रेक्षितुं प्रवृत्तमात्रस्य तस्य परिभ्रमन्ती नयने

CC-0 Pulwama Collection. Digitzed by eGangotri

हठात्स्वसमीपपतिनोऽतिविशालशाखासम्भारस्य चिञ्चावृक्षस्य मूले पतितायाः निर्वाणाया मृद्दीपिकाया इतस्ततः प्रकीर्णानां शुष्काणां कर्णिकारकुसुमानां पिपीलिका भिर्नीयमानानां रक्ताक्षतानामीषदस्पष्टीभूतस्य चिताभस्मरेखावलयस्य समीप एव पतितस्य...अकालकालकवलितबालकधवलकपालभांडस्य चोपरि पेततुः।

सहसा प्रयत्नप्रेरितेऽपि नग्नप्रायशरीरं कृशं ह्रस्वप्रमाणं कृष्णवर्णमुदग्रनयनं तं कापालिकं तत्पूजितं रक्तचन्दनचर्चितं रक्तकुसुमार्चितं भीषणं विहसन्नरमुण्डं च द्रष्टुं न शेकतुः।

प्रसह्य एवमवबोधितो विगतरात्रिवृत्तान्तस्य याथार्थ्यविषये...दुर्दैवी स राजकुमारः परिगलितधैर्यः कम्पमानगात्रो महता कष्टेन समुदतिष्ठत्।

अगच्छच्च, महता प्रयत्नेन, समवलोक्य तमुत्थितं प्रहृष्टमधीरतया खुरेण भूमिं खनन्तं ह्रेषारवमुखरं नातिदूरवर्तिनं स्वमश्वं प्रभञ्जनं...विमनस्कः।

CC-0 Pulwama Collection. Digitzed by eGangotri

## दशमः परिच्छेदः

उह्यमानश्च सहवेदनक्षमेण विदिततन्मनोवस्थेनैव सुखदगतिना तेनाश्वेनाविदन्नेव ललाटंतपनतापमनभिनन्दथन्नेव शीतलसमीरस्पर्शम् परिलक्षयन्नेव मार्गं धूलिधूसरितसर्वाङ्गः, शुष्कधर्मबिन्दुलाञ्छितभालपट्टः, प्रबुद्धश्मश्रुजालकृष्णतरमुखमुद्रः परिशुष्यन्मुखः,-तस्य तामवस्थां द्रष्टुमपारयतीव पश्चिमसागरे निमज्जति भगवति भास्वति, निपतितेषु तद्नुकंपाश्रुबिन्दुष्विव गगनाङ्गण आविर्भवत्सु नक्षत्रेष्वसङ्ख्येषु पापप्रभावं मनसिकृत्य गृहंप्रत्यागच्छन्तं स्वस्वामिनं समवलोक्य परं दुःखिताया अगतिकाया अङ्गदेशश्रियः निःश्वास इव मन्द मन्द वहति कदुष्णे निशामुखसमीरे, विजित्य तद्हृदयं प्रवृद्धोत्साहेऽकुतोभये तमोगुण इव मूर्तिमति चराचरं प्रसह्ययाऽऽक्रामति नैशेऽन्धकारे पापसखे, तदाक्रमणप्रतिरोधार्थं कथञ्चित् प्रयतमानेषु सत्त्वगुणावशेषेष्विव मार्गेषु चत्वरेषु देवतायतनेषु निवासेषु तत्र तत्र प्रज्वलत्सु क्षीणप्रभेषु प्रदीपेषु-स्वप्रासादप्राकारमहाद्वारं प्राप ।

तथैवान्यमनस्कश्च···अस्वीकुर्वन्नेवाकस्मादागतं विलक्षणावस्थमुन्मत्तप्रायं तमवलोक्य चकितानां भीतानां त्वरमाणानां ससम्भ्रमाणां रक्षाधिकृतानां सैनिकानां प्रणामान्, कथञ्चिदवतीर्य प्रवासधूलिधूसरितदेहात् प्रस्रवत्स्वेदकणाङ्कितघोणात् फेनिलमुखात् परिश्रान्तात् प्रभञ्जनात्, सहसा प्रविवेश स्वशयनकक्षाभ्यन्तरम् ।

परिहरंश्च परमविश्वासपात्राणामपि सेवकानां सम्पर्कमवधीरयन्नुपोषितायास्तत्प्रत्यागमनवार्तां चिरप्रतीक्षितामुपलभ्य किञ्चित् समाश्वस्ताया अपि चिन्तातुरायाः परिचारिकामुखेन वारं वारं तदवलोकनेच्छां प्रदर्शयन्त्याः जनन्याः साग्रहमनुरोधवचनं, तां निशां, शयनपतितोऽप्यविन्दन्नेव क्षणिकामपि निद्रां, मद्यपानप्रवृत्तोऽप्यनाप्नुवन्नेव मदोल्लासं कथमप्यत्यवाहयत् तीव्रविचारकल्लोलविलोडितमानसः ।

अनावृतेभ्यः पुरुषप्रमाणेभ्यः शयनकक्षवातायनेभ्यः सभयमिव साशङ्कमिव प्रविशन्तीभिः परिस्फुटितसुमनोमोदवाहिनीभिः प्रासादक्रीडासरोवरवीचिसमालिङ्गनशीतलाभिः प्राभातिकसमीरलहरीभिः परिवीजितः किञ्चिच्छीतली-

CC-0 Pulwama Collection. Digitzed by eGangotri

कृतोत्तप्तभालप्रदेशश्च, तन्मनोवस्थां ज्ञातुं त्वरमाणहृदययेवाऽऽरुण्या प्रभया समुत्सार्यमाणे पूर्वादिगङ्गणात् नैशेंऽधकारे, क्षणमात्रमस्वपत ।

अपश्यच्चात्मानमतिविशालायामुत्तुंगायां महाप्रमाणवातायनप्रविशद्रविकिरणाऽऽलोकिताभ्यन्तरमहार्हरत्नपुष्परचनामनोहरस्तम्भमालिकायामुच्चावचराजपुरुषकृतसंमर्दायां राजसभायां विविधमणिखचितसौवर्णसिंहासनोपविष्टं दिगन्तविजयिसामन्तवरेण्यनिबद्धोभयपार्श्वं हीरककुण्डलिनं रत्नखचितमुकुटमण्डितं निरुपमसुन्दरचामरिकावीज्यमानं निखिलभारतवर्षीयनृपमण्डलीमुकुटमणिप्रभाधौतपादाम्बुजं समीप एव सादरं सेवायामुपस्थितेन विचित्रवेषेणासुरदेशाधिपप्रतिनिधिना सह संलपन्तम् ।

प्रबोधितः क्षणमात्रानन्तरं राजप्रासादाट्टालकनिःसरत्प्राभातिकमङ्गलतूर्यध्वनिलहरीभिः पटुप्रहण्यमानपटहनिःस्वनानुसृताभिः दिगन्तव्यापिनीभिः, प्राक्तनवशात् तं प्राभातिकं स्वप्नं दिशाप्रदर्शकं नियतिनिदेशमेव गूढं प्रेषितं मन्यमानो, विधिलिखितं भाग्योत्कर्षमेव पूर्वदृष्टं कल्पयन्, हठाद्दूरीकृत्य किंकर्तव्य-भारं हृदयावस्कम्भकं, बलादपसार्यावसादजालं चित्तप्रतिबन्धकं विनिश्चित्य स्वात्मनैव सह किमपि, सहसा शय्याया उत्तस्थौ, परिसमाप्य प्रातःकालिकं नित्यं दैहिकं क्रियाकलापं सद्यःस्नानोज्ज्वलमुखमुद्रः कृतविशेषकः परिगृहीतधौतधवलमृदुलवेषः, घनीभूतशिशिरकरकरनिकरेणेव शुभ्रेण मौक्तिकधाराऽलंकृतेनोष्णीषेण सुशोभितमस्तको वेत्रधारिणीमुखेन मातुः दर्शनं चायाचत ।

अधिगत्य च क्षणमात्रानन्तरमेव तदनुज्ञां धीरोद्धतया गत्या नमयन्निव सर्वंसहां समतिक्रम्य कक्षान्तराणि पलायमानतिमिरावशेषदुर्लक्ष्यविशेषाणि प्रविवेश तस्याः शयनकक्षम् ।

ददर्श च वातायनसमीप एव स्फटिकमूर्तिवदुपविष्टाम् उद्यद्रविकिरणाऽऽलोकितारक्तां मेघमालां प्राचीनां क्षितिजवर्तिहिमवच्छिखरमालां विडम्बयन्तीं शून्यमनस्कतयैवावलोकयन्तीं, प्रविशच्छीतलसुखदमन्दवातलहरीदोलायमानविलुलितालकां मलिनवस्त्रामपरिमार्जितमुखकमलां, मूर्तिमतीं मातृहृदयवेदनामिव ताम् ।

वेत्रधारिण्या सूचितप्रवेशश्च, तस्मिन्नेव क्षणे व्यावर्तितजागरणोच्छूनाऽऽरक्तनयनकमलया जनन्याऽभ्यनुज्ञातस्तत्समीप एवाऽऽसन उपविवेश ।

तन्मानसतलमवगाहमानाभ्यामिव निर्निमेषस्थिराभ्यां नयनाभ्यां तमवलोकयन्त्यास्तस्याः पारदर्शिनीं मर्मस्पर्शिनीं दृष्टिं स्वदृष्ट्या प्रयत्नस्थिरया,-जुगुक्षयन्त्या इव किमपि कुत्सितं घृणितं सङ्कल्पितं कर्म, निगडयितुमपारयंश्च, इतस्ततः कौतूहलाक्रांत इव नयने व्यापारयन्···अनुपभुक्तायां समास्तरणायां

CC-0 Pulwama Collection. Digitzed by eGangotri

शय्यायामपीतोदके रजतकलशे⋯अन्ते दक्षिणानामिकांगुलीयकेन सह क्रीडन्नाधोदृष्टिर्मन्द्रया वाचाऽवोचत्—

'निरचिनवमहं स्वकर्तव्यं, मातः। तवैव हितवचनमनुसरिष्यामि। करिष्यामि च स्वव्यवहारं नम्रं⋯तं प्रति। वस्तुतोऽहोरात्रं पर्यालोचयन्नपि बहुवारमात्मनो व्यवहारं, न कामपि त्रुटिं न किमपि दोषस्थलं तत्राहमपश्यम्। मम तं प्रति व्यवहारः न कदाप्युद्धत आसीत्। यदि तु तस्मिन् विनम्रतायाः सर्वजनसुलक्ष्याया अतिरेकः नासीत्तर्हि तत्र मम स्वभाववैशिष्ट्यमेव कारणम्। स्वभावत एवाहमेकान्तप्रियो मितभाषी च। तस्य कृपाप्रसादादाबाल्याल्लब्धयानुशासनकठोरया शिक्षया तीक्ष्णतरीभूतं च तद्वैशिष्ट्यं मम व्यवहारेऽनिच्छतोऽपि वरीवृत्यते, वरीवर्तिष्यते च। स्वभावो हि दुरतिक्रमः। तथापि—'यथास्वभावमाचरतो मे वर्तनेन मम साक्षाज्जनको दुर्मनायत' इति मनसि सततं कुर्वन्नहं स्वभावमतिक्रम्य वर्तितुं प्रयतिष्ये'।

'तदधीनप्रशासक इव च व्यवहर्तुम्। वस्तुतो मम मनसि 'स्वतन्त्रोऽहम्। अङ्गदेशस्य नृपोऽहम्' इति धारणा स्वप्नेऽपि कदाऽपि नोदभवत्। तेनैव खलु प्रशासनानुभवार्थमस्मिन् प्रदेशे प्रेषितस्य,यौवराज्ये यथाविध्यभिषिक्तस्य, निश्चितपैतृकराज्यलाभस्य मम चित्त एतादृश्या आशावैफल्यमात्रसम्भाव्योद्गमाया धारणायाउद्भवावकाश एव न।'

'यस्तु मम प्रदेशस्यास्य प्रशासनिकव्यवस्थापरिवर्तने आर्थिकव्यवस्थादृढीकरणे रक्षोपायनवीनीकरणे चाभिनिवेशः एतावत्कालपर्यन्तं तेन चारदृष्ट्या परिलक्षितोऽन्यथा च गृहीतो मम दुर्भाग्यवशात्—स तावन्ममार्थनीतेः राजनीतेश्चाधीतान् सिद्धान्तान् प्रात्यक्षिके क्षेत्रे परीक्षितुमुत्सुकस्योत्साहादेवाविर्भूत आसीत्।

'यदि तु स न तं बहु मन्यते तर्हि तमद्य प्रभृत्येवाहं संन्यस्यामि। क इह तेन मम लाभो वृथा पितृशङ्काकारिणा? या च मे तीक्ष्णबलायाः सुनियन्त्रितायाः कठिनतमकार्यक्षमायाः नवीनायाः सेनायाः निर्माणेऽभिरुचिः साऽपि मम चेष्टैवाऽऽसीत् प्रतिकूलासु परिस्थितिषु प्रयोगार्थं तस्मै तां समर्प्य चकितात्तस्मात् साधुवादान् लब्धुं कृतसङ्कल्पस्य। तथैव च मम नवीनरणयन्त्रपरिकल्पनाऽभिरुचिः। अत एवाहं ते द्वे अपि तस्मादगूहम्।'

'अद्य प्रभृत्येवाहं ताभ्यां द्वाभ्यामपि विरंस्यामि।'

'यदि नाम मम पिता हर्यङ्कराजवंशप्रस्थापकस्य स्वपितुः स्वप्नं साकारं कर्तुं तथा सर्वजनसमक्षं सोत्साहमात्मानं प्रदर्शयन्नपि तद्विषये वस्तुतः स्वयमुदासीनः, किञ्चिदपि कर्तुमक्षम, आत्मनः पुत्रमपि तथैवोदासीनमेव काङ्क्षति तर्हि तथैव भवतु तत।'

CC-0 Pulwama Collection. Digitzed by eGangotri

'अहमपि, महाराज्ञ्या भ्रातुष्पुत्र इव, वाक्शूरोऽकर्मण्यताकर्मठः, क्षुद्रैन्द्रिय-सुखोपभोगमात्रलक्ष्यो भविष्यामि। भवन्तु नाम मम सहजाः शक्तय आरोपिताश्च गुणा विफलाः। क इह मम लाभ इत्थमहर्निशं भाविमहदुत्तरदायित्वनिर्वाहपूर्वा-भ्यासं प्राणपणेन कुर्वतः पितरं च प्रतिकूलं कुर्वतः स्वयंसिद्धं स्वीयमुत्तराधि-कारमेव च सङ्कटापन्नं कुर्वतः ?

इत्येवमादि च बहु तथाऽगददधोदृष्टिर्भद्रस्वरो विनम्रो यथा तस्य स माता,...जानत्यप्यात्मन एकमात्रस्याऽऽत्मजस्याभिभवासहिष्णुं परिभवप्रचण्डम-कुतोभयं तेजस्विनं स्वेच्छामात्रवशंवदमाग्रहिणञ्च स्वभावं समुपस्थितेष्वपि सङ्कटे-ष्वणुमात्रमप्यविचलद् धैर्यं च, कक्षप्रवेशक्षण एव स्वदृष्ट्या चिन्तातुरया मिलि-तायां तस्य दृष्टौ साक्षात्कृत्यादृष्टपूर्वमस्वाभाविकमस्पष्टं कमपि भावं, समुत्प्रेक्ष्य कापट्यलेशं क्षणमात्रं विचलितहृदयाऽपि,—अस्वस्थहृदयाऽपि—अन्ते—किं विधिलिखितवशात्, किं वा सहजहार्यत्वान्मातृहृदयस्य, न जाने किमिति,—तस्य वचने दृढं विश्वासं बबन्ध।

दूरीभूतदुरूहहृदयभारेव प्रत्यागतप्राणप्रकाशेव घनचिकुरमवनतं वासितं तन्मस्तकं भूयोभूयः करतलेन सुमनोमृदुलेन स्नेहमन्थरेण परामृशन्ती, साश्रु-नयनोत्पला, स्फुटितहासोद्भासितमुखकमला, किमपि किमपि मन्दं मन्दं जल्पन्ती, क्षणमात्रं तं तत्कर्तव्यमुपदिदेश, क्षणमात्रानन्तरं भाविनं तस्य समुत्कर्षकाल-मुत्प्रैक्षत, क्षणमात्रानन्तरं बाल्ये कदाचित् पितुरपराद्धस्य दण्डितस्यानुशयान्वितस्य तस्य वर्तनं स्वसमीपेऽस्मरत्, क्षणमात्रानन्तरं च तमन्यैर्युवराजैः विशेषतः कोशलयुवराजेन वत्सराजेन च—सह तुलयन्ती तमेव बहु बहु मेने। अन्ते च सोत्साहा महताऽऽत्मविश्वासेनाशपद्यथा मगधेश्वरो विस्मृत्य सर्वमान्तरालिकं दौर्मनस्याभासं यादृच्छिकं पूर्ववदेव तस्य मगधराज्योत्तराधिकारविषयेऽनुकूलः स्यात्तथा प्रयतितुं प्राणपणेन।

मगधेश्वराय प्राणेश्वराय विनिवेद्य स्वप्रयत्नसाफल्यं तस्य मनोमालिन्यं दौर्मनस्यमुद्वेगं खेदं च विलापयितुमुत्सुकाऽपारयन्ती चाधीरतया कालमति-वाहयितुमनिच्छन्त्यपि स्वपुत्रं तथा विमनस्कं विहाय गन्तुं साऽपरेद्युरेव, मातृ-वञ्चनापरं पुत्रं कुलकलङ्कायमानं निर्भर्त्सयितुमिव वेगेनोदयाद्रिशिखरमारोहति भगवति त्विषाम्पतौ, पतनगर्तोन्मुखं तादृशं पुरुषवरमवलोक्य खिन्नाया भारतभुवः निःश्वास इव मन्दं मन्दं वहति कदुष्णे समीरेऽश्रुतपूर्वसदृशीं मातृविप्रलम्भवार्तां परस्परं सोद्वेगं श्रावयत्स्विवोच्चैर्विरुवत्सु खगकुलेषु, सा, बहुवारं समाश्वास्य विनयावनतं किलाधोमुखं स्वपुत्रं पुनः प्रत्यागमनवचनप्रदानेन, मगधराजकेतु-मण्डितं तमेव धवलाश्वं रथं समारुह्य राजगृहाय प्रातिष्ठत...स्नपयित्वा चरण-

CC-0 Pulwama Collection. Digitzed by eGangotri

नतं पुत्रं स्नेहमय्या 'दुग्धकुल्ययेव दृष्ट्या', समुल्लसितमुखकमला विहसन्नेत्रोत्पलाङ्गरक्षकपरिवृता ।

अजातशत्रुस्तु, प्रतिनिवर्त्य मातरमेवं राजगृहाय प्रत्यागतप्राण इव, समुपजाताऽऽश्वास इव, यथापूर्वं प्रशासनकर्मण्येवाऽऽत्मानं दिवानिशं न्ययोजयत्··· आविष्ट इव केनाऽपि दुर्ग्रहेण ।

एकं तु मौलिकं परिवर्तनं स तद्दिनादारभ्यैव स्वप्रशासनपद्धतौ महताऽभिनिवेशेन व्यदधात् । प्रत्येकं नूतनं प्रशासनिकं कार्यं राजगृहानुकूलं स्यान्न वेति विचार्यानुकूलं परिलक्षितं महताऽऽडम्बरेणान्वतिष्ठत् । अननुकूलं चाऽऽदित एवात्यजत् ।

अत्यल्पमिदमुक्तम् । यानि यानि प्रशासनिकानि परिवर्तनानि तेन ततः पूर्वमङ्गदेशस्य भूमिव्यवस्थायामार्थिकव्यवहारपद्धतौ शिक्षाप्रणाल्यां राजस्वाऽऽदानपद्धतौ च जनसामान्यहितेच्छया कृतान्यासन्, तानि तानि स तथा परिवर्तयामास यथा तानि मागधपरम्पराया उद्भूतानीव तदनुकूलानीवाऽऽपातदृष्टिगोचरीबभूवुः ।

यथा चैतत् परिवर्तनं स्वप्रशासनपद्धतौ प्रसिद्धिमधिकतमां लभेत मागधनृपसंनिधौ तथा तांस्तानुपायान् महता चातुर्येणायुनक् । एतदर्थं स मागधान् वणिजस्तत्तद्व्यापारिकसुविधाप्रदानेन प्रोत्साहयामासाऽङ्गदेशाभ्यन्तरे स्वव्यापारजालविस्तारार्थम् । मागधान् पण्डितांश्च तत्तद्धार्मिकसांस्कृतिकसामाजिकसमारोहेषु विशिष्य बहुमानयाञ्चकार ।

प्रधाने राजगृहकोषागारे तत्परतयाऽतिप्रकटया प्रेषयामास स मगधाधिपतये प्रदेयं सांवत्सरिकं समग्रमपि सञ्चितं राजस्वधनम् । तत्प्रेषणविलम्बार्थं च कतिपयान् राजस्वाधिकारिणः निमित्तीकृत्य तानभर्त्सयत् सर्वजनसमक्षम् ।

अङ्गदेशाद् बहिर्मगधदेशे, कोशलराज्ये वत्सदेशे···सर्वत्रैव प्रसृतं चारजालं प्रसह्य तथोपसञ्जहार यथा तदपि मगधराजस्य तत्स्नेहवशंवदानां चान्येषां राज्ञां सुविदितं स्यात् । आम् । उपसञ्जहार सर्वत्र प्रसृत चारजालम् । परन्त्वापाततः । वस्तुतस्तु—बहुसंख्यकानि चारचक्षूंषि निमोलयन्नपि, कतिपयानि सुपरीक्षितानि नितान्तं विश्वसनीयानि दुर्ज्ञेयानि तानि तत्र तत्र स्वस्वकर्तव्ये दक्षतराणि यथा स्युस्तथाऽन्वतिष्ठत् । विशेषतो मगधाधिपसंनिधौ । तस्य मगधाधिपस्य स्वज्येष्ठमातुश्च समीपे सः, शनैः शनैः, परिहरन् संशयलेशं, तेन तेन मिषेणैतादृशान् चारान् निपुणतमान् प्रसारयामास यन् तन्माध्यमेन स तयोः क्षुद्रतममपि विचारमाचारं वाऽविलम्बेनैव पर्यलक्षयत् ।

CC-0 Pulwama Collection. Digitzed by eGangotri

स्वसेनाबलं च नाभनक् । नापि मगधाधिपवशंवदं तदकरोत् । केवलं तत्परिवर्द्धने स्वोत्साहम्—आपाततो—ऽत्यजत् । सर्वजनदुर्लक्ष्यं यथा तत् स्यात्, साधारणजनौदासीन्यविषयां यथा तत् प्राप्नुयात्, समुपेक्ष्यमाणमिव यथा तन्निपुणस्यापि निरीक्षकस्य दृग्गोचरीभवेत् – तथा तत् प्राशात् ।

नवीनरणयन्त्रकल्पनाकौतुकमपि परितत्याज नाम विगतोत्साह इव । मागधेभ्यो रणकलाविद्भ्यः सेनाधिकारिभ्यो वा तद्रहस्यानि तु न ददौ ।

संक्षेपतो दृढबद्धमूलस्य निरपेक्षस्य स्वसामर्थ्यस्य मौलिकीं क्षतिं महता चातुर्येण परिहरन्, धैर्यैः नामोपायैः स्वस्य मगधाधिपवशंवदत्वं तदधीनत्वं च सार्वजनीनं, विशेषतो मगधाधिपवेद्यं, स्यात् तांस्तान् उपायानाललम्बे ।

तच्चातुर्यप्रभावाद् वा विधिलिखितवशाद् वा तस्य ते कुटिला उपायाः शीघ्रमेव साफल्यमलभन्त ।

दैवोपहतमतिर्मगधाधिपतिश्चम्पानगर्याः प्रतिनिवृत्त्याऽऽगतायाः समुल्लसिताचितायाः राज्ञ्याः वैशाल्या विदितमतिशयोक्तिसमनुप्राणितं स्वपुत्रस्यानुशयातिरेकवृत्तान्तं शनैः शनैर्वास्तविकमेव मन्तुमारभताङ्गदेशे सर्वत्र प्रसृतात् स्वचारबलात् प्रत्यहं समापतत्सु प्रशासनिकपरिवर्तनवृत्तान्तेषु विश्वसन् ।

आरभत चाऽऽशासितुं यद्…यथासमयं तस्य शूरः स्वाभिमानी पुत्रः परिधौतौद्धत्यकलङ्कोऽनुशयनम्रस्तच्चरणे निपीड्य वन्दितुं तत्पुरत आगमिष्यतीति ।

परन्तु, तस्य साऽऽशा…दुराशैव दुर्भाग्योपहतस्य…न कदाऽपि फलवती बभूव ।

तस्य सः शूरोऽभिमानी पुत्रः नैकदाऽपि तच्चरणे निपीड्य वन्दितुं तत्पुरत उपतस्थौ ।

CC-0 Pulwama Collection. Digitzed by eGangotri

## एकादशः परिच्छेदः

नियतिशप्तं कालदष्टं मगधराजमित्थमापातसत्येनानुशयान्वितेन विनीतेन वर्तनेन समाश्वस्तं विधाय, स्वभावत एव मितभाषी निसर्गत एवैकाकी सोऽजातशत्रुः, छायामात्रसाहाय्येन प्रवर्तितायां गूढायां स्वाधिकारसम्पादनचेष्टायामधिकतर एव मुद्रितौष्ठपुटः, शनैः शनैः, परिहरन् संशयकारणं स्वल्पमपि, कुशाग्रबुद्धिदुर्भेद्यस्य तीक्ष्णदृष्टिदुर्लक्ष्यस्यैतादृशस्य कपटजालस्य निमित्तान्तरव्यपदेशः निर्मितौ मनश्चक्रे…यत् प्राचीने भारतीयेतिहासे संवत्सरशतकानन्तरं मागध एव राज्य एकाकिना बुद्धिमात्रसाहाय्येन विप्रेणैकेन निर्मितेन कपटजालान्तरेणैवातिशयितं बभूव तत्।

सर्वप्रथमं स सेवारतानामङ्गदेशीयानामतिविश्वसनीयानामधिकारिणां समूहात्, पर्यालोचयाऽऽत्मनैव, तदर्थं स्वप्राणानपि समुत्स्रष्टुं तत्परान् तीव्रमतीनुदग्रस्वभावान् स्वीकृतं कार्यं शापादपि शरादपि साधयितुं तत्परान् द्वादश यूनोऽचिनोत्। तेभ्यश्च शपथबद्धेभ्यः सङ्कल्पितस्य कार्यस्य रूपरेखां न्यवेदयत्।

तेषां च मध्यात् स महाकुलस्नेहसम्बन्धवशादनाशङ्कनीयगतिविधीन् पञ्च यूनस्तत्तत्कार्यविशेषं तत्तदनुष्ठेयमुपदिश्य, साक्षान्मगधराजस्य वैयक्तिकसेवायां प्रवेशं येन केनापि मिषेण येन केनापि प्रकारेण लब्धुं व्यसृजत्।

तेऽपि, क्षेत्रान्तर्चिकित्स्यमहाव्याधिकीटका इव, मगधराजप्रशासनशरीरे गूढं प्रविष्टाः, अत्यल्पेनैव समयेनानुत्पाद्यैव कस्यापि संशयमल्पतममपि, कृतोन्नतयोर्जित्वाऽऽसन्नदुर्दैवमूर्च्छितमतीनां मगधराजसुरक्षाधिकृतानामुच्चाधिकारिणामात्यन्तिकं विश्वासमचिरादेव मगधराजस्याङ्गरक्षणोत्तरदायित्वं स्वयमध्यगच्छन्, दक्षेण मधुरेण वर्तनेन राज्ञः प्रियतमाश्चाभवन्…पृथक् पृथक् नितान्तमपरिचिता इव परस्परेण। आरूढाश्च निर्धारितपूर्वाणि पदानि, वास्तविकस्य काल्पनिकस्य वा यस्य कस्यापि वैयक्तिकस्य कारणस्य वशात् साक्षात् मगधराजमेव परं द्विषतोऽपराधप्रवृत्तीन्, कपटवृत्तीन्, कतिपयान्, मागधान्, पुरुषान्, वैयक्तिकसेवकमिषेण सञ्जगृहुः। अनन्यवशंवदांश्च तान् विधाय तैस्तैरुपायैः निभृतं स्थापयामासुः…व्यापारयितुं समुचितेऽवसरे।

CC-0 Pulwama Collection. Digitzed by eGangotri

अवशिष्टानां च यूनां मध्यादेकं नवनिर्माणचतुरं कल्पनानिपुणं युवा मगधराज्यसमीपवर्तिनोऽनाव्यप्रवाहेण दुष्प्रसहवेगेन शोणमहानदेनाऽऽरक्षितपार्श्व-स्याज्ञातप्रायस्य पाटलिग्रामस्य समीप एव समुन्नततरे विशाले समतले भूप्रदेशे प्रासादमेकं स्थलदुर्गप्रायं राजकीयाऽऽवासमिषेण शीघ्रमेव निर्मातुं समादिदेश।

सोऽपि महतोत्साहेनार्जितुं दुराराध्यस्य शीघ्रकोपस्य कर्मठस्य स्वामिनः निःशब्दं साधुवादमविगणय्य धनव्ययमहोरात्रं प्रतिक्षणं व्यापारयन्नपरिमितां मानवशक्तिं, कतिपयैरेव मासैः विनिर्दिष्टे स्थलेऽनभ्रङ्कषशिखरमपि नातिविशाल-मप्यतिदृढं महानदप्रवाहपरिवेष्टितप्रायं सर्वविधसुविधोपपन्नं प्राङ्मुखं प्रासाद-मेकं निर्मापयति स्म।

तत्स्वाम्यपि, परिभिन्न इव खिन्न इव, निक्षिप्य प्रशासनभारमधिकारिषु, तस्मिन् प्रासाद उषित्वा, महानदे जलक्रीडयाऽसकृत् श्रमापनोदं कर्तुमारभत।

एकदा च, निगीर्णे सूचिभेद्येन घनतिमिरेण चराचरे, श्रमक्लान्तेषु निद्रामग्नेषु रक्षकपुरुषेषु, क्षुद्रालातधारिणा प्रासादरक्षामहाधिकृतेन तेनैव यूनोप-दिश्यमानमार्गः, निभृतं, प्रासादभूमितलान्तर्वर्तिनो द्वित्रान् गूढान् कक्षान् निषिद्ध-सूर्यप्रकाशान् निवारितस्वच्छन्दवातप्रवेशान् गुप्तप्रवेशद्वारान् निरीक्षयाञ्चकार।

अवशिष्टानां षण्णां यूनां मध्यादेकं व्यवहारचतुरं मधुरभाषिणं पाषाण-हृदयं सर्वग्राहिणं विहङ्गदृष्टिं तीक्ष्णबुद्धिं कपटजालस्य प्रधानतन्तुभिस्तैस्तैर्युवभिः निभृतं निरन्तरं सम्पर्कं साधयितुं, समुपस्थितेष्वनपेक्षितेषु वा विघ्नेषु तान् प्रत्युत्पन्नस्वमतिबलेन तत्क्षणमेव निराकर्तुं, प्रमुखकार्यकारिणां गतिविधिषु पारस्परिकं सौमनस्यमापादयितुं च न्ययोजयत्। अस्थापयत्तं चम्पानगर्यामेव परन्तु क्षुद्रस्य राजस्वाधिकारिण एकस्यापदेशेन, परिहरन् सर्वजनसमक्षं तत्सम्पर्कम्. आदिशच्च निभृतं कार्यप्रगतिनिवेदनार्थमसकृत्।

अवशिष्टांश्च स आत्मन एव समीपे तत्तदधिकारिव्यपदेशेन स्थापयामास प्रयोगार्थमुपस्थितेऽवसरे समुद्भूते वाऽप्रत्याशिते कस्मिंश्चिद् विघ्ने।

एवं, निष्पापान् स्वच्छन्दविहारिणः खगानाबद्धुं पापर्द्धिरिव पाषाण-हृदयः⋯सोऽजातशत्रुः सरलस्वभावं निराशङ्कं स्वपितरमाबद्धुं दुर्लक्ष्यं कपटजालं विस्तारयितुं प्रचक्रमे। लेभे च शीघ्रमेव साफल्यं कल्पनातीतमवश्यम्भावित्वाद् विधिलिखितस्यानुल्लङ्घनीयत्वान्नियतिनिर्देशस्य।

तत्प्रेरितास्ते सर्वेऽपि यूनः,—यमदूता इव दुःसहगतयः,-अवलोकयतामेव दक्षम्मन्यमानानां दैवोपहतदृष्टीनां मागधचाराणां-शीघ्रमेव निर्धारिते स्वे स्वे स्थाने दृढबद्धमूलाः, संनद्धमात्मानं खड्गपाताय तस्मै न्यवेदयत्।

CC-0 Pulwama Collection. Digitzed by eGangotri

सोऽपि प्राणान्तकखड्गप्रहारायावसरं समुचितं प्रतिपालयन् तूष्णीं तस्थौ अलभत च तं नातिचिरादेव।

नातिचिरादेब हि,-एकदा समुपविश्य नवनिर्मितस्य 'क्रीडाप्रासादस्याट्टालके, मन्दवातलहरीपरिचुम्ब्यमाने समुद्यत्तरङ्गे निर्मले महानदजलप्रवाहे प्रतिबिम्बितमचिरोदितमारक्तमादित्यमण्डलं दोलायमानं दिव्यं रक्तप्रभं शतपत्रमिव निर्निमेषया दृष्ट्या कदाचिदवलोकयन्तं, कदाचिन्मन्दसमीरलहरीसमानीयमानं कोलाहलं पथिकानां नौकातरणोत्सुकोत्सुकानां पाटलिग्रामावतारे सुदूरे समवेतानां विमनस्कतया शृण्वन्तं, कदाचिन्महानदपरतीरवर्तिषु क्षितिजपटे दिव्यचित्रकारचित्रितेष्विव शस्यश्यामलेषु विस्तीर्णेषु क्षेत्रेषु दृष्टिं क्षिपन्तं, कदाचित् प्रासादप्राकारभित्तितलं पाषाणमयं व्यर्थं समालिङ्गतां महानदजलोर्मीणां थप्-थप्-ध्वनिषु कर्णं ददतं, कदाचिन्महानदतीरवर्तिनि देवतायतने कस्मिंश्चित् श्रद्धालुना केनचिदाराधकेन प्रहन्यमानाया घण्टिकाया रवं स्वच्छन्दवातलहरीसमानीयमानं शृण्वन्तं प्रसारितस्य कपटजालस्य विषय एव सततं चिन्तयन्तं,-तं निःशब्दमुपसृत्य प्रतिहारिमुख्यो ब्राह्मणं काञ्चिदाशीर्वचनदानार्थं दिदृक्षुं न्यवेदयत्।

सोऽपि, 'वास्तविकः कोऽपि ब्राह्मण आशीर्वचनदानार्थं मां द्रष्टुं नोत्सहेत। स तु सर्वविदिते राजकीये दानधर्मविभाग एव गत्वा-शृण्वत्सूदासीनेषु तदधिकारिषु तन्महत्तमं कार्यं स्वजात्युचितं कुर्वीत। लभेत च राजाज्ञानुसारं प्रभूतां दक्षिणाम्। तदनेन गूढेन चारेणैव केनचिद्राजगृहात् सम्प्रेषितेन भवितव्यम् इति मनसि कृत्वा, वस्तुतः समुत्सुकोऽपि प्रकटतः समुद्विग्नमिवानिच्छन्तमिव कमपि ब्राह्मणब्रुवं दर्शनप्रदानेनानुग्रहीतुमात्मानं दर्शयन्, तत्प्रवेशमनुजज्ञे।

अन्यस्मिन्नेव च क्षणे, तस्मिन् कक्षे प्रवेशितं नातिदीर्घं नातिस्थूलं गौरं वर्णं धौतधवलवेषं भस्मभासुरभालप्रदेशमेकेन हस्तेन रुद्राक्षमालामपरेण च कमण्डलुं वहन्तं शिशिरकरकरनिर्मितेनेव शुभ्रेण यज्ञोपवीतेनोद्भासितवक्षःस्थलं चञ्चल-चतुरचक्षुषं ब्राह्मणमेकमक्षिलक्ष्यीचकार। उदतिष्ठच्चानिच्छन्नपि तत्सभाजनार्थम्-अवलोकयति सादरे प्रतिहारिप्रमुखे द्वारस्थिते किञ्चिच्चकिते। किञ्चिन्नमितोत्तमाङ्ग एव चाशृणोत् धीरगम्भीरामपि तीक्ष्णमतिसुलक्ष्यप्रकम्पामाशीर्वचनवाणीं-'विनङ्क्ष्यन्ति तेऽरयः, राजन्। सफलीभविष्यन्ति तव मनोरथाः। आसन्नप्रायस्य फाल्गुनमासस्य शुक्लपक्षेऽष्टम्यां तव भाग्येशः लग्नराशिं वेक्ष्यति। स च विलापप्रबलतमानपि तव शत्रूननयासेनैव! ललाटलिखितमेव द्योतयति तव भाग्यसम्पद'मिति। तत्क्षणमेव परिज्ञाय च तन्निहितं गूढं सन्देशमौत्सुक्यताम्यद्हृदयोऽपि कृताऽऽकारगोपनम्, आश्वस्तमिव प्रभावितमिव सुखितमिवात्मानं तां भविष्यद्वाणीं निशम्य दर्शयन्, तस्य ब्राह्मण (कृतक) स्य तेजसाऽभिभूतमिवाऽऽत्मानं प्रकटयन्, अधिकतरमेवाऽऽदरप्रह्वस्तमतिथिसत्कारस्वी-

CC-0 Pulwama Collection. Digitzed by eGangotri

कारेणानुग्रहीतुमभ्यर्थयामास विनयनम्रया वाण्या। अवलोकयामास च प्रतिहारि-प्रमुखं साभिप्रायम्।

अपगत एव तस्मिन् तत आशीर्वचनमुखरे, घटिकामात्रं पर्यालोच्य स्वात्मनैव, विनिश्चित्य च स्वयमेव किमपि, सङ्कल्पितकार्याभिज्ञानां स्वसमीप-स्थानां पञ्चानां यूनां मध्यादेकं वेषवाग्वर्तनपरिवर्तनचतुरमाह्वाययत। शीघ्रमेव सेवायां समुपस्थितं तं राजगृहात् सद्यः प्राप्तं गूढं सन्देशं श्रावयित्वा, तदहरेव छद्मवेषं गृहीत्वा राजगृहं गत्वा मगधराजस्य वैयक्तिकसेवायां गूढं प्रवेशितानां कृतकाङ्गरक्षकाणां प्रधानात् विदित्वा सर्वं वृत्तान्तं प्रेषितसन्देश-सम्बद्धं शीघमेव प्रत्यागन्तुमादिशत्।

सोऽपि तदहरेव प्रस्थितो धृतपांसुलपादग्रामीणवेषो मगधराजधान्यां यथा-निर्देशं गूढं साक्षात्कृत्य तत्रत्यं प्रमुखं राजकीयसेवासमुत्सुकसाधारणयुवकछद्मना समधिगत्य सविस्तरं समाचारं, विस्मित इव राजधानीवैभवावलोकनेन दिनमेक-मतिवाह्य तच्छोभावलोकने नाम, पाटलिग्रामं न्यवर्तत···हताश इव। परिहरंश्च कालापव्ययं, समुपस्थित एव प्रथमेऽनुकूलेऽवसरे तमजातशत्रवे न्यवेदयत्—

'स्वामिन्! उपस्थित इवानुकूलतमोऽवसरः परिलक्ष्यते। ज्ञायते हि यत् स भवतोऽनुकूलं विनम्रं व्यवहारं वीक्ष्य परमाश्वस्तः, राज्यप्रशासनभारं-वस्तुत-स्तेन कदाचिदेवोह्यमानं-परमविश्वसनीयेषु स्वामात्येषु निक्षिप्य, प्राप्तप्रायं होलिकादहनमहोत्सवं भगिनीं तत्पतिं च चिरात् खल्वनवेक्ष्य दुर्मनायमानस्य कोशलनरेशस्य प्रसेनजितः परिवारेण सहाभिनन्दयितुं राजगृहादासन्नस्य फाल्गुन-मासस्य शुक्लपक्षे सप्तम्यां तिथौ श्रावस्त्यै प्रस्थानं करिष्यति। महाराज्ञी कोशलदेवी केवला तेन सह प्रवत्स्यति। स्वामिनो माता मद्रराजसुता च ससुता राजगृह एव स्थास्यतः। यथा खलु तेन सह क्षुद्रतमं बलं कृशतमञ्च परिजनवृन्दं प्रवसेत्तथाऽस्माभिः प्रयतितम्। सफलीभूतं च। तस्मिन्नपि क्षुद्रतमे बले कृशतमे च परिवारे यथाऽस्माकं पक्षपातिनः सैनिकाः सेवकाश्च स्युस्तथैवास्माभिः प्रयतितम्। अतः राजगृहादयमनुरोधः स्वामिचरणयोर्यत् यदि योग्यं मन्येत स्वामी तर्हि राजगृहात् श्रावस्त्यर्थं प्रस्थितः सः, अष्टम्यां तिथौ, प्रहरमात्राव-शिष्टायां रात्रौ, भागीरथ्या दक्षिण एव तीरे, प्रवासानन्तरं सुखं विश्रान्तिसुलभ-मनुभवन्, सकलत्रः, प्रसह्य बन्दीकरणीयः। कोशलदेशं समुद्दिश्य सुदूरं प्रोषिते, भागीरथ्या उत्तरतोरवर्तिनि वा कस्मिंश्चिद् वनप्रदेशे कृतविश्रामे तस्मिन् कतिप-यदिवसानन्तरं निगृहीते सति, तस्य, परिवर्ज्य जनसामान्यसंशयं, अदत्त्वा कस्मैचि-दप्यपहर्तृं विषये कल्पनालेशं, ततः पाटलिग्रामपर्यन्तं निभृतमानयनं दुष्करमेव स्यात्। यद्यपि स्वामिचरणयोर्निवेदितं प्रहारस्थलं राजगृहान्नातिदूरं·· तथापि चम्पाया अपि तन्नातिदूरम्। पाटलिग्रामादपि तन्नातिदूरम्। प्रत्युत-मगधराज-

CC-0 Pulwama Collection. Digitzed by eGangotri

धान्यास्तत्सामीप्यमस्माकं विपक्षिणां मनसि सम्भ्रममेवोत्पादयेत् । चम्पानगर्याः सामीप्यवशात् स्वामी···अष्टम्यामेव तिथौ पश्चिमामाशामवलम्बमाने दिनकरे, ततो मृगयापदेशेन निर्गतोऽपि···अनवरतं प्रवसन्···प्रहरमात्रावशिष्टायां तस्यामेव रात्रौ प्रहारस्थल आगन्तुं शक्ष्यति बन्दीकृतं च तं गृहीत्वा रथ्यान्तरेण पाटलिग्रामं प्रतिगन्तुम् । तदनुगृह्णातु स्वामी स्वाभिप्रायनिवेदनानुग्रहेण··· शीघ्रमेव-' इति ।

अजातशत्रुस्तु चिकीर्षितकार्यपद्धतेः सङ्कल्पितं तमालेखं निशम्य प्रभावितोऽपि प्रकटतया विचारमग्नमिव गुणदोषपरामर्शपरमिवाऽऽत्मानं दर्शयन् चिरात् खलु स्वसम्मतिं प्रकटीचकार । समादिदेश च तदनुसारं कार्यं कर्तुम् ।

एवं स्वामिन आदेशमनुसृत्य निभृतमप्रतिरोधं स्वं स्वं कार्यं कुर्वतां कपटजालतन्तुवायानां तेषां भावनाशून्यमनसामधिकारिणां, स्वयं यवनिकान्तः स्थित्वा दैनिकप्रशासनकार्यभारव्यापृतमिवाऽऽत्मानं दर्शयित्वा मगधराजं प्रति स्वं वर्तनं विनम्रतरं कृत्वा मानवहृदयसुलभाः कोमला भावना गलपीडं निष्पीड्य स्ववोतं कपटजालं सततं निरीक्षमाणस्य क्षुद्रतममपि तद्दोषं तस्मिन्नेव क्षणे दूरीकुर्वतः केनचिद् दुष्टेन प्रेतात्मनाऽभिनिविष्टेनाहर्निशं प्रतिपलं प्रतिक्षणं प्रेर्यमाणस्येव निष्करुणस्य तस्याजातशत्रोः, अवश्यम्भावित्वाद् विधिलिखितस्य विस्मृत्य राजकीयस्य तस्य ज्योतिर्विदस्तां भविष्यद्वाणीं स्वान्तस्तले विषमयैरिवाक्षरैः लिखितां वशीभूय पितृहृदयस्वाभाविकस्य स्नेहस्य स्वपुत्रस्य तस्मिन् व्यवहारपरिवर्तने कृतविश्वासस्य 'प्रतिनिवृत्य कोशाम्ब्या अचिरादेवाऽऽगामिन्यां सर्वमङ्गलायामक्षय्यतृतीयायामेव वत्से कुणीकेऽनुभवविदग्धे राज्यकार्यभारं विधिवद् विन्यस्य महाराज्ञ्या सह वानप्रस्थाश्रमे प्रवेशः कार्यः । सङ्कल्पस्त्वयं महाराज्ञ्यै अपि नाधुनैव प्रकटीकरणीयः । कुणीकाय पादवन्दनार्थमागताय (आगमिष्यत्येव सः) अनुशयविनम्रमुखाय सर्वप्रथमं कथनीयम्' इति स्वात्मनैव सम्प्रधार्य समुल्लसितमानसस्य सुगोपितमनोरथस्य बालकस्येव स्वात्मन उल्लासं तेन तेन मिषेण गूहतो मगधराजस्य वृद्धस्य बिम्बसारस्य, युवराजस्य वर्तनपरिवर्तनमप्रत्याशितमपि चिराकांक्षितमनुभूयाऽऽदौ चकितायाा अपि नातिचिरादेव स्वाभाविकवात्सल्यवशीभूतहृदयायाः समाश्वस्तमानसायाश्चिरात् खलुवाञ्छितं मातुर्गृहे होलिकादहनमहोत्सवसुखमासन्नप्रायं परिकल्प्य मातृगृहगमनोद्यतायाः सद्योविवाहिताया इव बालिकायाः समुल्लसितमानसाया महाराज्ञ्याः कोशलदेव्याश्च राज्ञ्यै वैशाल्यै क्षमाय च तानि तानि कुलदेवतार्चनसम्बद्धानि विविधानि कार्याणि समर्पयन्त्याः कदाचिदासन्नविपदाघातपूर्वछायाकलुषितस्वान्ताया इव रणरणकखिद्यमानमानसाया आन्तरालानि दिनान्यविदितगतयामान्येव व्यतीयुः ।

CC-0 Pulwama Collection. Digitzed by eGangotri

प्रादुरासीच्च फाल्गुनमासस्य शुक्लपक्षीया साऽष्टमी तिथिर्यस्यां घटितया घटनया पितृवचनपालनार्थं परित्यज्य सिंहासनमरण्यवासं दुःखबहुलमङ्गीकुर्वता दाशरथिना रामचन्द्रेण पितृमनोवासनापरितृप्त्यर्थं परित्यज्य यौवनसुलभमुपभोगमाजीवनं ब्रह्मचर्यमुररीकुर्वता भीष्मेण च प्रोद्योतितायाः प्राचीनाया आर्यसंस्कृतेर्गौरवमय इतिहास आकल्पान्तं कलङ्कितो बभूव ।

समुत्तेजितमानस इव चाऽऽगामिनीं तां घटनां पापमयीं मनसि पुनः पुनर्विभाव्य भगवान् दिनकरस्त्वरितयेव गत्या पश्चिमाम्बुनिधौ निमज्ज्य रसातलमगात् । आसन्नायास्तस्या घटनाया विषये जनसामान्यमुद्बोधयितुं समुत्सुकोऽप्यजातशत्रुभयात् तथा कर्तुमपारयन्निव दुःखभराक्रान्तः सायंसमीरो मन्दं मन्दं ववौ । कर्तृत्वशालिनस्तस्य क्षत्रियवरेण्यस्य तथा घोरं विनिपातं साक्षात्कर्तुमनुत्सुकोऽपि सृष्टिसञ्चालकेन प्रदत्तं कर्तव्यभारमुपेक्षितुमसमर्थ इव शशाङ्कः शनैः शनैः पौरस्त्यं गगनाङ्गणमाक्रमितुं प्रचक्रमे ।

प्रातिष्ठत च मृगयापदेशेन (-अथवा मृगयार्थं-) युवराजोऽजातशत्रुः क्रीडाप्रासादात् लोहकवचाऽऽवृतसर्वाङ्गः लौहशिरस्त्राणाऽऽच्छन्नमस्तकोऽक्षिमात्रलक्ष्यव्यक्तिः सुतीक्ष्णभल्लोदग्रहस्तः प्रकम्पमानप्रोथं चञ्चलपुच्छं तीक्ष्णनेत्रं समुत्तेजितं प्रभञ्जनमारूढः स्वसमानवृत्तान्तैस्तैः पञ्चभिर्युवभिः जवनाश्वारूढैरनुसृतः । परिहरंश्च पाटलिग्राममध्ययायिनं मार्गमवधीरयन् तं निवारयितुमिव प्रयतमानानामुच्चैः रुदतीनां शिवानामशिवानि रुतानि, तिरस्कुर्वन् प्रतीपं वहन्तं कदुष्णमुग्रगन्धं—तमभिनन्दयितुमभिमुखमागच्छतः रौरवनरकाधिपस्य स्नेहोच्छ्वासमिव वातं, प्रासादाट्टालके मूर्तिवत् स्थित्वा निर्निमेषं ध्यायतस्तस्य प्रासादरक्षाधिकृतस्याधिकारिणोऽक्षिविषयतां शीघ्रमेवात्यक्राम्यत् ।

प्रवसन् अनवरतं, अतिक्राम्यन् निर्जनान् समतलान् विषमान् निम्नोन्नतान् प्ररूढवृक्षतया दुष्प्रवेश्यान् निर्वृक्षतया सुगमान् शुष्कान् कर्दमप्रायान् भूप्रदेशान्, परित्यजन् जनसामान्यमार्गं क्षुद्रतममपि, अस्पृशन् निद्राजडानामपि कुग्रामाणां सीमाप्रदेशान्, भाययन् सद्यःप्रबुद्धान् भक्ष्यमार्गणे प्रवृत्तान्' वलोक्य विवरतः कृष्णखण्डान् चकितान् रात्रिञ्चरान् श्वापदान्, जागरयन् सद्यःप्रसुप्तान् क्लान्तान् गलितगात्रानन्यान् पशून्, प्रोत्साहित इव सह प्रवसद्भिः कृष्णकायैर्विशालैः दिवाभीतैः कुत्सितं विरुवद्भिः, विदीर्य सर्वंसहाया उदरं बहिरागतानां कृष्णवर्णानां कृष्णवाहनानां कृष्णकृत्यानां राक्षसानां कस्यचिन्निरपराधस्य निराशङ्कस्य निष्पापस्य प्राणापहरणाय त्वरमाणानां भीषणरमणीयां शोभां विडम्बयन्, गगनमध्यमलङ्कुर्वत्यासन्नप्रायं पापानुष्ठानं साक्षात्कर्तुमनिच्छुक इव घनपटलाऽऽवृतमुखबिम्बे चन्द्रमसि…प्राप भागीरथीतीरं पूर्वनिर्धारितम् ।

CC-0 Pulwama Collection. Digitzed by eGangotri

तत्समीपवर्तिन्यां किञ्चिदुन्नतभूतलप्ररूढायामवलोक्य तं भयजडायामिव निःशब्दायां गहनवृक्षराजौ निलीनश्चानुयायिभिः सह···अधः प्रसृते विस्तृते क्षीणचन्द्रिकोद्भासिते सद्योविधवाभालप्रदेश इव धवले तस्मिन्···सर्वत्र तीक्ष्णे सावधाने लोचने व्यापारयामास ।

अवलोकयामास च नातिदूर एव पूर्वापरदिगन्तचुम्बिप्रवाहायाः क्षीणचन्द्रिकोद्भास्यमानजलतरङ्गाया धवलतीरोपरुद्धप्रवाहाया मलिनस्फटिकभूमावालिखिताया दीर्घदीर्घाया रजतपट्टिकायाः शोभामनुकुर्वत्याः निराशङ्कं प्रसुप्ताया इव प्रशान्तवाहिन्या भागीरथ्याः रोधसि, जलसमीप एव, चन्द्रिकाधवले बालुकामये प्रदेशे क्लृप्तं धवलमेकं विशालं मगधराजवंशध्वजभूषितं पटवासं, तस्मान्नातिदूर एव वर्तुलाकारेण क्लृप्तान् षट् साधारणान् मलिनवर्णानन्यांश्च पटगृहान्, नातिदूर एव ततो विश्रान्तान् नीलगगनतले कतिपयान् तुरङ्गमान्, रथं च विमुक्ताश्वमेकम् ।

प्राहिणोच्च···तस्यामेव गहनवृक्षराजौ तुरगादवतीर्ण, एकमधिकारिणं पदातिमेव निभृतं तं पटकं समुद्दिश्य । सोऽपि, शनैः शनैरुपसृत्य तं निःशब्दं तस्मिन् प्रविष्टः कतिपयक्षणानन्तरमेव न्यवर्तत । अकथयच्च किञ्चित् स्वामिनं मन्द्रेण स्वरेण । अजातशत्रुरपि तन्निशम्य दृष्टिपातमात्रेण स्वानुयायिनः समादिश्यानुगमनाय, बद्ध्वा प्रभञ्जनं तदन्यतमतरुमूले, पदातिभिरन्यैरनुगम्यमानः, निःशब्दमग्रे सरन्, क्षीणे तस्मिन् चन्द्रिकाप्रकाशे निर्घृणं कञ्चित् संकल्पं मनसि कृत्वा प्रचलितानां समीपवर्तिगहनवनराजिघनतमःखण्डानां शोभां रोमाञ्चकारिणीं विडम्बयन् पश्यतामेव निर्निमेषाणां स्तब्धानां गगनाङ्गणकृतसम्मर्दानामसंख्यानां नक्षत्राणां तं स्कन्धावारमविशत् ।

निभृतं च पितुः पटमण्डपमितरेभ्यः पटगृहेभ्यः निःशब्दं निःसृतैः लौहकवचाऽऽवृतकायैः लौहशिरस्त्राणाच्छन्नमस्तकैरक्षिमात्रलक्ष्यैः सशस्त्रैः कृतकैर्मगधराजाङ्गरक्षकैः स्वानुयायिभिरुपोद्वलितबलः ।

अपश्यच्च क्षणमात्रं तन्मध्यवर्तिनि नातिविशालेऽपि सर्वविधसुविधोपपन्ने महार्हास्तरणसंछादितरोधस्तले मन्ददारुदीपदण्डाऽऽलोकिताभ्यन्तरे भागीरथीसमीरप्रकम्प्यमाननीलकौशेयाऽऽवृतपटभित्तौ विश्रामकक्षे सुखं विश्रब्धं च प्रसुप्तौ मृदुलचीनांशुकाऽऽवृतक्षीणशरीरौ मन्दनैशदीपप्रकाशसुलक्ष्यधवलकेशौ मन्दं मन्दं श्वसन्तौ स्वपितरौ ।

अन्यस्मिन्नेव च क्षणे, हठात् ततः परिवर्त्य दृष्टिं स्वानुयायिनः निःशब्देनेङ्गितेनादिदेश ।

CC-0 Pulwama Collection. Digitzed by eGangotri

ते च, तत्क्षणमेव, अग्रे ससर्पुः बन्दोचकुश्च तौ वृद्धौ जायापती··· निद्रितावेव प्रसह्य धृतेषु दुर्बलेषु करेषु निगड्य ।

वृद्धो बिम्बसारस्त्वेवं हठात् प्रबोधितः सुखनिद्रायाः क्षणमात्रं निद्रावशेष-जडाभ्यामर्द्धोन्मीलिताभ्यामन्यस्मिन्नेव च क्षणे विस्फारिताभ्यां नयनाभ्यामव-लोक्य समन्ततः स्थितान् महाप्रमाणान् सुगोपितदुर्लक्ष्यव्यक्तिविशेषान् सुतीक्ष्णभल्लोदग्रहस्तान् निर्निमेषया दृष्ट्या तावेव सोपहासमिव निरीक्षमाणान् —प्राणापहारार्थं समयात् पूर्वमेवोपस्थितान् यमदूतानिव,—भागीरथीपावनप्रवा-हेण निष्कासितान् स्नातभावुकजनपापपुञ्जानिव मूर्तिमतः- नैशे समये यथेच्छं काकतालीयन्यायेन तत्र समुपस्थितान् निशाचरानिव भीषणान्, आकृतिविशेषान् भयाक्रान्तः, क्षणमात्रं परिकल्पयन् दुःस्वप्नपीड्यमानमेवाऽऽत्मानमन्यस्मिन्नेव क्षणे निगडितौ दुर्बलौ स्वहस्तावनुभूय तां भ्रान्तिं दूरीकुर्वन्, क्षणमात्रं स्मरन् बहोः कालात् प्राक् तस्य वृद्धस्य कूटदन्तस्याऽऽत्रासं तादृश्यामेव निशायां प्रसह्या-ऽऽक्रामतः कृष्णाकृतीनाततायिनः, अन्यस्मिन्नेव क्षणे प्रसह्य परिमार्जयन्नमङ्गलां तां स्मृतिं स्वमनःपटलात्, क्षणमात्रमुत् पश्यन् रिपुसनिकान् गूढमभिभवतः, अन्यस्मिन्नेव क्षणे तामपि सम्भावनां निराकुर्वन् मगधराजधानीसामीप्यं मनसि-कृत्वा,···अन्ते किङ्कर्तव्यविमूढः शयनपतित एव तस्थौ ।

क्षणमात्रानन्तरं च निःशब्दैराततायिभिर्बलादुत्थापितः शयनात्, समन्ता-दवलोकयन्, अपश्यत् स्वशयने पूर्वमेवोत्थायोपविष्टां विलुलितधवलविरलकेश-पाशां किञ्चित्परामृष्टसौभाग्यतिलकां भयाक्रान्तयाऽपि स्थिरया दृष्ट्याऽऽततायि-प्रमुखमेव किञ्चित्परावर्तितमुखं प्रत्यभिजिज्ञासयेव निरीक्षमाणां स्वपत्नीं··· विनिगडितकृशमणिबन्धाम् ।

क्षणमात्रानन्तरमेवात्मानमपश्यदाततायिनोऽन्यतमस्येङ्गितानुसारं शयनादु त्थितं, पटमण्डपाद् बहिरनावृतपादं निःसरन्तं, शून्यं प्राणहीनमिव स्कन्धावारं विहाय तीरसीमावर्तिनीं गहनवृक्षराजिं समुद्दिश्य कथमपि प्रभृष्टनीशारं चलन्तं, तत्र समुपस्थापितेऽश्वे केनचिदारोह्यमाणं, केनचिद् विधृतरज्जुना तेनाश्वेन तत उह्यमानं, तुल्यवृत्तान्तया भार्यया···छाययेव···अनुगम्यमानम् ।

CC-0 Pulwama Collection. Digitzed by eGangotri

## द्वादशः परिच्छेदः

अजातशत्रुस्तु, दास इव दुष्टस्य यत्किञ्चित्कारिणः कस्यचित् प्रेतात्मन, एवमनुष्ठायोभयलोकविरोधि कृष्णं कृत्यमनुशयलेशमप्यननुभवन्, मूकौ दुर्बलावर्द्धविगलितप्राणाविव किञ्चिदप्यप्रतिकुर्वन्तौ यन्त्रचालिताविव परेच्छानुसारिणौ समुदासीनौ निस्तेजस्कौ वृद्धौ जायापती इव सर्वोपेक्षितौ तौ स्वपितरौ स्वापेक्षाविपरीतं दृष्ट्वा क्षणमेकमस्वस्थचित्तोऽपि तत्कालमेव प्रकृतिं स्नेहभावशून्यां स्वभावकठोरामापन्नः, किञ्चिदाकुञ्चिताऽऽरक्तलोचनस्तौ कृष्णवस्त्रावगुण्ठितसर्वशरीरौ कारयित्वा, मार्गनिर्देशनार्थं किल किञ्चिदग्रे सारयित्वा मन्दगतिमसमर्थमिव पापराशिभारभुग्नं स्वामिनं वोढुं प्रभञ्जनं, पाटलिग्रामप्रासादं समुद्दिश्य प्रवस्तुमारभतानुगम्यमानस्तेन कदाचिद् गहनवृक्षराजिच्छायादुर्लक्ष्येण, कदाचिद् दुर्मनायमानस्येव क्षीणप्रभस्य शशाङ्कस्य करैरनिच्छयेवेषदालोकितेन, निर्जनतया तस्यारण्यपथस्य केनाऽप्यनवलोकितेन, रात्रिञ्चरैर्वन्यैः श्वापदैरपि जुगुप्सयेव समुपेक्षितेन, विलक्षणादिव लोकात् कस्मादपि मर्त्यलोक आपतितेन सूर्योदयात् प्राक् कस्मिंश्चिद् गूढे स्थले निभृतं निलीयाऽऽत्मानं रक्षितुं प्रयतमानेन पापिप्रेतात्मसमुदायेनेव मूर्तिमता निगृहीतनिष्पापनिःसहायजीवात्मद्वयेन तेन भीषणरमणीयेन तुरगसादिदलेन।

प्राप च प्रहरमात्रावशिष्टायां तस्यां शुक्लायामपि कृष्णायां तमस्विन्यां, स्वेदार्द्रतुरङ्गमः परिश्रान्तसहपथिकः, कथमप्यनुष्ठाय जगन्नियन्त्रा सर्वसृष्टिसञ्चालकेनानादिकालात् प्रदत्तं कर्तव्यं पश्चिमाम्बुनिधौ निमज्ज्य प्रक्षालयितुमिव पापकर्मसाक्षात्कारकलङ्कं गते शिशिरकिरणे, चित्रगुप्ताय निवेदयितुमिव तत्पापाचरणं कुत्रापि गतासु तारासु, पाटलिग्रामप्रासादस्य पश्चाद्भागवर्ति गुप्तं प्रवेशद्वारं पुरुषमात्रप्रमाणम्।

तत्र तदागमनं यथानिर्देशं प्रतिपालयत एकाकिने तस्मै प्रासादरक्षाधिकृताय युवकायाऽऽज्ञापालनदक्षाय प्रदाय निःशब्दं तौ बन्दिनौ, तेन कृष्णवस्त्राऽऽवृतमुखावेवान्तःप्रवेशितौ तौ वीक्ष्य ततः न्यवर्ततान्यैरश्वारोहैः सह। मृगयायाः प्रत्यागच्छन्तमिवात्मानं प्रकटयन् प्रविवेश प्रासादं विरलतररक्षकेण महाद्वारेण।

CC-0 Pulwama Collection. Digitzed by eGangotri

स्वशयनकक्षे कृतवस्त्रपरिवर्तश्चानुष्ठाय कथमपि नित्यदैहिकक्रियां, आरक्तनयनः परिश्रान्तगात्रः जागरणोच्छूननाडीभीषणभालप्रदेशः, निर्विघ्नं विनैव रक्तपातं विनैवाऽऽक्रोशं विनैव बलात्कारं विनैवात्याचारं सफलं पर्यवसानं यातेऽपि स्वकल्पनामात्रोद्भूते कपटजालेऽपेक्षितं समाधानमलभमान, उच्छ्वासमननुभवन्, प्रत्युताधिकतरमेवास्वस्थचित्तोऽधिकतरमेवाशान्तस्वान्तोऽसमर्थ इव तस्मिन् प्रासादे ततः परं क्षणमात्रमपि स्थातुमातुर इव तस्मात् स्थानात् दूरं-अतिदूरंयत्र कुत्रापि गन्तुं, शीघ्रमेव, आरोहति पूर्वाचलशिखरं श्रुत्वा कर्णोपकर्णिकयाऽऽततायि कृत्यं निर्घृणं परं कुपित इवाऽऽरक्ते भगवति सवितरि, सह स्वानुयायिभिस्तुल्यवृत्तान्तैरङ्गराजधान्यै चम्पानगर्यै चचाल प्रासादरक्षाधिकृतं तमधिकारिणं संसूच्य।

तत्र च दैनिकप्रशासनकार्यव्यापृतमिवाऽऽत्मानं प्रकाशयन्, निभृतं, मगधराजं विलोपमात्यन्तिकमाकस्मिकं गतं विज्ञाय राजगृहेऽन्यत्र चावश्यम्भाविनीः प्रतिक्रियाः प्रतिपालयन्—क्रूरः श्वापद इव निहतधेनुः जानपदप्रतिहिंसां—अशान्तस्वान्तो विक्षुभितचित्त उन्निद्रप्रायः क्षणमात्रमपि शान्तिमात्मनोऽविन्दन् कानिचिद्दिनानि तूष्णीं तस्थौ।

अध्यगच्छच्च शीघ्रमेव प्रजविसन्देशहराऽऽहृतं सन्देशं, जनन्या, राजगृहात् कोशलराजधानीमुद्दिश्य महाराज्ञ्या सह कृतप्रस्थानस्यात्यल्पपरिजनाऽऽवृतस्य मगधराजस्य कुशलवार्तां कोशाम्ब्याः प्रेषितामप्राप्य किञ्चिच्चिन्तितमानसया, प्राप्य कौशाम्ब्याः कोशलनरेशस्य चकितस्य दुःशङ्काग्रस्तस्य समाचारं यत् 'स्वनामधन्यो मगधराजोऽद्यापि नागतः कोशलदेव्या सह व्यतीतेऽपि पर्याप्ते समये'—अधिकतरमेव चिन्ताग्रस्तया किङ्कर्तव्यविमूढया, 'प्राप्तायां परिस्थितौ प्रौढः पराक्रमी युवराज एव परामर्ष्टव्यः, स एव पितरं मृगयिष्यते सत्वरम्' इति सम्प्रधार्य प्रेषितम्।

अत्यन्तमुद्विग्नमिव चकितमिव चिन्तितमिवाऽऽत्मानं प्रदर्शयन् सः राजगृहाय तत्क्षणमेव प्रातिष्ठत प्रभञ्जनमारुह्य तैरेवानुयायिभिः युवभिः सह।

साक्षात्कृत्य चान्तःपुरस्थितां मलिनवसनां विलुलितालकाननां चिन्तामग्नां माद्रोद्वितीयां मातरं, क्षणमात्रमपि तत्समक्षं स्थातुमसमर्थः, परिहरन् तन्नयने निष्प्रभे, महताऽऽवेगेन समाश्वास्य तां कनिष्ठां च मातरं ततो निर्गतस्तत्क्षणमेव स्वीकृतमगधराज्यप्रशासनसूत्रः, 'पितुरनुपस्थितौ स्वाभाविकमेवैतत् युवराजस्य कृत' इति मनसि कृत्वा प्रधानामात्यादिभिः प्रमुखैः राजपुरुषैश्चिन्तामग्नैः किङ्कर्तव्यविमूढैः निःशब्दमनुमोदितो, विस्मयजनकमदर्शनं गतस्य वृद्धस्य पितुर्गवेषणाय नामान्वेषकजालं विस्तारयामास महताऽऽडम्बरेण।

CC-0 Pulwama Collection. Digitzed by eGangotri

शीघ्रमेव च सार्वजनीनविषयतां प्राप्तान् भागीरथीतीरे वालुकामय इतस्ततः पतितान् वातविदीर्णान् विशीर्णान् मलिनान् मगधराजपटकावशेषान् तद्ध्वजांशाननाथमिव पतितमश्रीकं रथं च चिन्तापूर्वकमाधृत्य, 'नूनं मगधराजोऽत्यल्पबलः नगाधिराजोपत्यकावर्तिभिरराजकैर्यथेच्छाचारिभिराततायिभिः कैश्चित् सशस्त्रैर्विनिमयद्रव्याभिलाषिभिः सहसाऽपहृत्योपत्यकावर्तिषु घनेषु वनेषु नीतो भवेद्' इति शङ्कां जनसामान्यमनसि महता चातुर्येण समुद्भावयन्, तस्यामेव दिशि तस्मिन्नेव प्रदेशे गवेषणाप्रयत्नान् तीव्रतरीकर्तुं स्वानुयायिनं युवानमादिदेश ।

साफल्यं च (स्वाभाविकतयैव) नालभत ।

एवं व्यतीतेषु कतिपयेषु मासेषु, परिकलय्य गवेषणाप्रयत्ने शिथिलोत्साहान् परिश्रान्तान् मागधानुच्चावचाधिकारिणः, स्वदैनन्दिनजीवनयापनव्यग्रीभवच्चेतसः सामान्यान् प्रजाजनान्, अकालवृद्धां शिथिलीतरीभवच्चिन्तां मातरं, हताशामपि शिरसि कृत्वा विधातुराज्ञां पुत्रयोरल्पवयसोर्लालनपालने पुनारममाणहृदयां कनिष्ठां मातरं माद्रीं च, आत्मानमपि हतोत्साहमिव कुण्ठितगतिमिव प्रतिरुद्धशक्तिकमिव सर्वजनसमक्षं दर्शयन्, अनिच्छन्निव पैतृकराज्य-प्रशासनभारमधिकाधिकमङ्गीकुर्वन्, कोशलनरेशस्य प्रसेनजितो, मद्रदेशाधिपस्य, उज्जयिनीनृपस्य महासेनस्य चण्डप्रद्योतस्य, गान्धाराधिपतेश्च साहाय्यं पितुरन्वेषणे वारं वारं प्रार्थयन्, यथा ते मागधा अधिकारिणः सामान्याश्च प्रजाजनाः सधनाः निर्धनाश्च सबला निर्बलाश्च प्रबुद्धा जडाश्च नागरिका ग्रामीणाश्च, मातरौ, मगधराजस्य स्नेहवशंवदाः राजानः दुर्दैविनं बिम्बसारं तस्य प्रियतमां महाराज्ञीं च विस्मरेयुस्तथा तांस्तानुपायान् प्रच्छन्नान् शनैः शनैरालम्बत उपयुयोज च महता चातुर्येण ।

सर्वप्रथमं, सः, नातिचिरादवलम्बितां (कृतक-) स्नेहार्द्रां नीतिमेव यथापूर्वमनुसरन्, पितृगवेषणावैफल्यवशादात्मानं पुत्रकर्तव्यपालनदुर्बलमिव दर्शयन्, मगधराज्यस्य सेवायां वंशपरम्परया निरतान् परमविश्वसनीयान् महामात्यादीन् वरिष्ठानधिकारिणः सबहुमानमिव सनिर्वेदमिव यथापूर्वं मगधराज्यं तादृशे प्राणान्तिके सङ्कटे स्वसेवया साहाय्ययितुं विज्ञापयामास । तेषां चैवं यथापूर्वं स्वस्वकार्यनिरतानां मार्गनिर्देशानुसारमिव प्रशासनकार्यभारं वोढुं प्रचक्रमे । शनैः शनैरुद्यदुत्साहप्रभ इव राज्यप्रशासन सञ्चालनसूत्राणि स्वहस्ते सङ्ग्रहीतुमारभत । तेऽपि पञ्चाशद्वर्षपर्यन्तं बिम्बसारस्य प्रदीर्घे प्रशासनकाले कदाचिदप्यननुभूतां साक्षान्नरेशस्य दैनन्दिनप्रशासनकार्याभिरुचिमनुभूय चकिता, उदग्रस्वभावत्वेन यत्किञ्चित्कारित्वेन प्रसिद्धिं प्राप्तस्य महाप्राणस्य बलिष्ठस्य दुर्धर्षप्रभावस्य सुशिक्षितस्य दक्षस्याङ्गदेशप्रशासनविषये सफलप्रयत्नस्य तस्य

CC-0 Pulwama Collection. Digitzed by eGangotri

सादरं व्यवहारं—सर्वथाऽनपेक्षितं साक्षात्कृत्य सुखिता, उच्छलदुत्साहस्य—यून इवाधीरस्य—तस्य कर्मठतां वीक्ष्य कौतुकान्वितास्तस्मै मगधराज्यप्रशासनस्य तेषां तेषामङ्गानां रहस्यानि स्वयं निवेदयाञ्चक्रुः। न विविदुश्च प्रशासनसूत्राणि शनैः शनैस्तद्हस्त एव एकीभवन्ति।

एवं प्रशासनयन्त्रस्य प्रमुखान् सञ्चालकानुच्चानधिकारिणः नाममात्रेणैव सञ्चालकान् विधाय सनिभृतं शनैः शनैस्तेषां समीपे स्वस्यानयायिनः परमविश्वासपात्रान् तत्तन्निषेण न्ययुङ्क्त…सम्भाव्यं तद्विद्रोहं सत्येव समये प्रावकलयितुम्।

निम्नस्तरीयानधिकारिणस्तु स मगधराज्यप्रदेशभ्रमणावसरेषु साक्षाद् विदाञ्चकार। तेषां कार्यपद्धतीः स्वयमवलोकयामास। तासां त्रुटीः दूरीकर्तुं स्वयमुपायानसूसुचत सौहार्दपूर्णयाऽधिकारवाण्या। राज्ञो वैयक्तिकीमभिरुचिं स्वकार्येषु परिलक्ष्य धन्यम्मन्यानां तेषां मध्याद्ये ता दूरीकर्तुं शेकुस्तान् सर्वजनसमक्षं बहु मेने। ये च न, तान् निभृतमनुद्भावयित्वैव तीव्रा विरुद्धाः प्रतिक्रियास्तदधिकारपदाद्दूरीचक्रे तदुच्चतराधिकारिमाध्यमेन। प्राप्त एव च स्वल्पतमेऽव्यवसरे प्रत्येकस्मिन्नधिकारपदे स्वपक्षपातिनो मागधान् यूनः अनुत्पादयित्वैवोच्चतराणामधिकारिणां मनसि संशयस्य लेशमपि—सहजमिव न्ययुङ्क्त।

इत्थमचिरादेव सः समस्तमागधशासनयन्त्रं तन्मात्रवशंवदं तदेकानुप्राणितं च चकार।

'सामान्याः प्रजाजनाः सुप्रशासनं काङ्क्षन्ति। न तेषां तादृशोऽभिनिवेशः प्रशासक'-इति चिरन्तनमर्थशास्त्रसिद्धान्तं मनसि कुर्वन्, स, मागधानां जीवनस्तरस्य समुन्नयने विशेषतो दत्तचित्तो बभूव। अब्दपरम्परागता मागधप्रशासनपद्धतीरेवानुसरन्तमिवाऽऽत्मानं प्रकटतो दर्शयन् सः शनैः शनैः अङ्गदेशप्रशासनसमये प्रयुक्तचराणि तत्र च सफलानि परिवर्तनानि तेषु तेषु कृषिराजस्वव्यापाराऽऽरक्षशिक्षासदृशेषु प्रशासनविभागेषु प्रावेशयत्। कार्यान्वितांश्च तान् स्वयमहर्निशमध्यैक्षत।

अचिरादेव तानि परिवर्तनानि स्वादून्यपेक्षितानि फलानि ददुः।

आरामो हि दक्षेण कर्तव्यकुशलेन परिश्रमिणाऽऽरामकेन सुनियोजित उर्वरया मृत्स्नया संयोजितः संयमितया जीवनधारयाऽऽर्द्रीकृतः निर्दुष्टैर्बीजैः सगर्भीकृतः शीघ्रमेव विविधमनोहरसुमस्तबकहृद्यो भवति।

इत्थं राज्याभ्यन्तरे स्वस्थितिं दृढतरां कुर्वन् स अजातशत्रुस्तद्बहिरपि तस्याः स्वानुकूलीकरणं मनश्चक्रे। सावधानतरश्च तांस्तानुपायान् शनैः शनैराललम्बे।

CC-0 Pulwama Collection. Digitzed by eGangotri

परिस्थितिवशात् साफल्यं तु नाधिकं लेभे। गान्धारादिराज्यानामधीशा हि क्लान्तमानसा एव तस्य प्रशासनं स्वीचक्रिरे…स्मरन्तः स्वमित्रस्य दुर्दैविनो बिम्बसारस्य विलयमात्यन्तिकमाकस्मिकं गतस्य।

कोशलवत्सलिच्छवीमद्रसदृशानां राज्यानां प्रमुखा बिम्बसारेण सह प्रबलैः पारिवारिकस्नेहसूत्रैराबद्धास्तस्य तादृशं भयंकरमदर्शनं विस्मर्तुं न सहसा शेकुः अजातशत्रुं च मगधराज्यसूत्राणि स्वहस्ते गृह्णन्तं न निरुद्वेगेन स्नेहेनाभिनन्दयितुम्।

विशेषतः कोशलराज्यस्याधिपो वृद्धः प्रसेनजित्। स हि 'होलिकादहनमहोत्सवं मया सह…मम परिवारेण सह…अनेकवर्षानन्तरमभिनन्दयितुं महतोल्लासेन राजगृहात् स्वभर्त्रा ममाभिन्नहृदयेन मित्रेण बिम्बसारेण सह प्रस्थिता मम भगिनी सामान्यपथिकनारीवानाथेव मार्ग एव कैश्चिदाततायिभिर्दुष्टैः पत्या सह लुण्ठिता…अदर्शनमात्यन्तिकं लम्भिता। …अहं च तस्याः परमप्रियो ज्येष्ठो भ्राता-,कोशलदेशस्याधीश्वरो, भारतवर्षस्य वरिष्ठतमः नृपः,—तां तस्याश्च पतिं वृद्धं पुनरुपलब्धुमसमर्थ—' इति दिवानिशं खिद्यन्, अजातशत्रोर्गवेषणाप्रयत्नान् नातिविश्वस्त इवावलोकयाञ्चकार। उदासीन इव चावर्तत तं प्रति।

विशेषतश्च वत्सराज्यस्याधीश्वरो युवा उदयनः। स हि…पितरि वृद्धे बिम्बसारे मातरि कोशलदेव्यां च विशिष्य स्निह्यच्चित्तयाऽनभ्रवज्रनिपातसदृशीं तद्घटनावार्तां निशम्य दुःखसागरमग्नया कोमलस्वभावया देव्या पद्मावत्या तयोर्विषये किञ्चिदपि कर्तुं प्रतिक्षणं प्रेर्यमाणः नुद्यमानः— सचिवायत्ततया स्वयं चेष्टितुमनुत्सुकोऽपि-मृदुस्वभावतयाऽपारयन् प्रियाया भार्याया विगतश्रि विलुप्तस्मित विलीनकान्ति क्लान्तं मूकम्—अपेक्षयेव कयाचित् तन्निगडितदृष्टिमुखमहरहरवलोकयितुं…कुण्ठितमतिः निरुद्धगतिरजातशत्रोर्गवेषणाप्रयत्नान् अश्रद्दधान इवापश्यत्। अपश्यच्च पारस्परिकसौमनस्याय तेन क्रियमाणान्तान् तटस्थ इव।

विशेषश्च स्वपरिवाराभ्यन्तरे परिस्थितिं सहजां स्वानुकूलां च कर्तुं कृतास्तत्प्रयत्ना वैफल्यमेव लेभिरे।

स्वभावत उदग्रोऽपि मितवचनोऽप्येकान्तप्रियोऽपि सः, स्वभावाद्विपरीतं यावच्छक्यं चेष्टमानः, स्वपितुर्महति परिवारे परिस्थितिः यैर्यैरुपायैः पूर्ववत् संपद्येत तांस्तानुपायान् शनैः शनैः प्रयुयोज। दुःखभराक्रान्तमिव पितृगवेषणावैफल्यवशाल्लज्जितमिवस्वात्मानं दर्शयन्नपि सः सहजमिव स्वमातरं भर्तृवियोगं विधिलिखितमिति स्वीकृत्य प्रकृतिस्थां शान्तां प्रशासनयन्त्रनवीनीकरणप्रयत्ने

CC-0 Pulwama Collection. Digitzed by eGangotri

ष्वनुरज्यन्मानसां दैनंदिनांत:पुरिककार्यसंचालनव्यापृतचिन्तां विधातुं प्रायतत परम्परया, कनिष्ठां मातरं च स्वपुत्रयोः लालनपालनाध्यापनसुविधाः पूर्ववदेवानुवर्त्यमानावलोक्य समाश्वस्तामीषदप्यन्यूनीभूतमहत्तां स्वस्थितेः साक्षात्कृत्य निःशङ्कां विधातुम् ।

परन्तु-तमाकस्मिकमापतत्तडित्प्रहारमनुभूय दग्धप्रायं तन्मातुः हृदयं, कालप्रभाववशात् बाह्यां शान्तिं क्रमिकां लभमानमपि 'अन्तर्गूढघनव्यथं पुटपाकप्रतीकाश' मेवाऽऽस्त । आपाततो दैनंदिनान्तःपुरिककार्यसंचालनव्यापृताऽपि, स्वपुत्रस्य प्रशासनयन्त्रनवीनीकरणप्रयत्नान्, तेन सादरं समये समये निवेद्यमानान्,श्रृण्वन्तमिवाऽऽत्मानं दर्शयन्त्यपि, प्रतिक्षणं स्मरन्ती स्वभर्तारं दिग्विलोपितमिव भूमिनिगीर्णमिवाऽऽकाशोत्पातितमिवादृश्यतामात्यान्तिकीं नीतं, सपत्नीमपि भर्तुरधिकतरस्नेहविषयामपि ज्येष्ठां भगिनीमिव सदा स्नेहार्द्रचित्तां सखीमिव सर्वविश्रम्भनिधानां प्राक्कलितानागतामिव महाप्रस्थानोद्यतामिव प्रस्थानसमये सर्वविधमेव कुलाचारानुष्ठानकार्यभारं तस्यै महता विश्वासेन ददतीम्, अन्ते साश्रु कृतप्रस्थानां कोशलदेवीं क्षणमात्रमप्यविस्मरन्ती कालं कथमप्यतिवाहयामास ।

न तथा माद्री क्षेमादेवी । तस्याहि प्रौढयौवनाया मानसं स्नेहशीलस्यापि वृद्धस्य-पितृसमवयस्कस्य-भर्तुर्विलोपेन किञ्चित्कालपर्यन्तमाशङ्कितमपि भीतजडमपि स्तब्धमपि नातिचिरादेव स्वास्थ्यं यौवनसुलभमलभत । पुत्रयोश्च शुक्ल पक्षचन्द्रयोरिव प्रतिक्षणं वर्धमानयोः क्रीडामुखरयोः प्रकृतिचञ्चलयोः कौतुके मातृस्वभावसुलभं विश्राममध्यगच्छत् ।

अजातशत्रुस्तु कनिष्ठां मातरं भ्रातरौ च यवीयांसौ हल्लवेहल्लौ प्रकृतिमापन्नौ वीक्ष्य किञ्चित् समाश्वस्तोऽपि साक्षान्मातरं दुःखभारभुग्नां स्फुटतरकृष्णवलयांकितम्लानलोचना स्पष्टतररेखाकलङ्कितभालप्रदेशामुद्भ्रान्तकल्पमानसामवलोक्य समुद्विग्नः स्वप्रयत्नान् तीव्रतरीचकार । परन्तु नालभत साफल्यम् ।

एकमात्रीं तत्कल्याणाकाङ्क्षिणीं तां तथा विषादसागरे निमंक्ष्यन्तीमवलोक्य च हताशः खिन्नः शनैः शनैः पारिवारिकपरिस्थितिविषय औदासीन्यमेवाभजत । यन्त्रचालिताया इव मन्त्रप्रेरिताया इव तानि तानि कार्याणि सपत्नी प्रदत्तानि निर्लिप्तमनुतिष्ठन्त्याः कांदिशीकचित्तायाः शरीरमात्रेणैव वर्तमानाया वास्तविकमत्याचारिणं क्षणमात्रमपि लेशतोऽप्यनुत्प्रेक्षमाणायास्तस्याः दुर्दैवोपहतायाः संमुखं क्षणमपि समुपस्थातुमसमर्थमात्मानमनुभवन् शनैः शनैस्तद्दर्शनमेवावीवृजत । क्रमशश्च राज्यप्रशासनकार्यजाल एवाऽऽत्मानमधिकाधिकं व्यापारयन् तस्मिन् महापापविस्मृतिममीमृगत ।

परन्तु-नालभत क्षणमेकमपि क्षणकल्पां ताम् ।

CC-0 Pulwama Collection. Digitzed by eGangotri

## त्रयोदशः परिच्छेदः

वृद्धो बिम्बसारस्त्वनभ्रवज्रपातसंनिभया भीषणया तया विपदा विलुप्तावधान इव विगलितविवेक इव बधिर इव मूक इव यन्त्रचालितकाष्ठपुरुष इवाऽऽघातकवशंवदः, कृष्णवस्त्रावगुण्ठितमुखतयाऽपारयनपहरणकर्तृनपहरणमार्गं वा परिलक्षयितुं-दूरीकृतेऽवगुण्ठने स्वात्मानमेकस्य नातिविशालस्य सद्योनिर्मितस्य निषिद्धसूर्यप्रकाशस्य निवारितस्वच्छन्दगन्धवाहप्रवाहस्य कोणैकदेशप्रज्वलत्काष्ठदीपप्रकाशिताभ्यन्तरस्य दारुमयपर्यङ्कद्वयसनाथस्य कक्षस्य मध्ये तिष्ठन्तमपसारितनिगडबन्धनमवलोकयामास। स्वपार्श्वं एव च तुल्यवृत्तान्तां भार्याम्।

अशक्नुवंश्च तां विलुलितधवलविरलालकां परिक्षामाननां तीक्ष्णोदग्रनयनां स्थिरया विचारमग्नया दृष्ट्या सद्यःपिहितं पार्श्वद्वारमवलोकयन्तीं द्रष्टुं, क्षणमात्रानन्तरमेवनेत्रे परिवर्तयामास कारापालमवलोकयितुम्। उपलेभे च तं तेनैव पार्श्वद्वारेण निःशब्दमपक्रान्तम्। विलीयमानचैतन्यज्योतिरिव शिथिलगात्रः शनैः शनैः पर्यङ्कमेकमुपससार। पातयामासाऽऽत्मानं तस्मिन् नातिमृदुलशय्ये। असूसुचत् इंगितेनार्द्धांगिनीं स्फटिकमूर्तिमिव निश्चेष्टां किंचिद्विश्रमितुम्। शयनपतितश्च क्षीणवेपमानभुजाऽऽवृतनयनः स्मरन् क्रमशः व्यतीतनैशघटनाक्रमं स्वप्नोपमं ज्वरसंतप्तमस्तिष्ककल्पनामात्रसंभाव्यं, क्लान्तः नातिचिरादेव निद्रानिमग्नो बभूव।

सर्वास्ववस्थासु तस्यानुगामिनी, सुखदुःखयोस्तस्य सहभागिनी, तस्यार्द्धांगिनी कोशलदेवी च।

चिराच्च प्रबुद्धः, शुष्यत्तालुः, श्रमजडसर्वाङ्गः, ज्वलन्नेत्रः, कथमप्युत्थाप्य कूर्परबलेनोत्तमाङ्गं, कक्षाभ्यन्तरे सर्वत्र विस्मयविस्फारिते नयने व्यापारयामासाऽपारयन्निवाऽऽत्मानं तथा विपरिवर्तितासु परिस्थितिषु निपतितं विश्वसितुम्। अवलोकयामास च समीपवर्तिनि पर्यंक आदित एव प्रबुध्योपविष्टां स्वभार्याम्…एकां वृद्धां पलितकेशां जीर्णमलिनवेषां दुर्बलां दासीं भोजनपात्रैः सह काराकक्षप्रवेशद्वारेण प्रविशन्तीं निर्निमेषमवलोकयन्तीम्।

CC-0 Pulwama Collection. Digitzed by eGangotri

निष्क्रान्तायां च तस्यां निधाय भोजनपात्राणि निःशब्दं, विनष्टक्षुदपि तिक्तमुखास्वादोऽपि कथञ्चिदप्यपारयनागत्य समीप उपविष्टायाः क्षीणक्षीण-स्वराया भार्यायाः साग्रहमनुरोधं वृथा कर्तुं महता प्रयासेन कांश्चिद्ग्रासान-भुनक्।

तमनु च सा।

पुनश्च निद्रावशौ बभूवतुस्तौ।

एवं व्यतीयुस्तयोः कतिपया अहोरात्राः। रात्र्य एव वा। निर्वातायने हि तस्मिन्-अन्यथा सर्वविधसुविधोपपन्ने-काराकक्षे निक्षिप्तयोस्तयोरसूर्यंपश्ययोः जायापत्योः कृते सर्वः समयः कृष्णरात्रिमय एव संबभूव। सूर्यश्च...चंद्रश्च... नक्षत्राणि च...ग्रहाश्चसर्वमपि कक्षकोणप्रज्वलत्काष्ठदीपमयम्।

शनैः शनैस्तयोः प्राणज्योतिस्तादृशंझंझावातनिर्वापितप्रायमपि पुनरपि किञ्चित् प्रजज्वाल।

दुर्दमनीया हि जिजीविषा।

किञ्चित् प्रकृतिस्थाविव च मन्द्रमन्द्रेण स्वरेणापहर्तॄणामाततायिनां विषये विचारविनिमयमारेभाते। अथवा-एकाकी वृद्धो बिम्बसार एव स्वमतान्य-भिव्यक्तुम्। तस्य भार्या हि, प्रायो विचारमग्ना एव, अशृणोत् तस्य तर्कानिर्द्धमनस्कैव।

आततायिनां वास्तविकस्य स्वरूपस्य विषये कुण्ठितमतिं प्रतिरुद्धगति-मात्मानं सर्वथा स्वीकुर्वन्नपि स दृढं विशश्वास यत्तादृशस्य घृणितस्य कृत्यस्यानु-ष्ठातारो बाह्या एव केचन दुराचारा मानवाधमा इति। स हि मेने-'मम प्रजाजनाः सुप्रशासनसंतुष्टाएवमुभयलोकविरोधि कुकर्म कदाऽपि न कुर्युरि'ति। 'बाह्यै रपि तैरराजकप्रायेभ्यो दुर्गमवनप्रदेशेभ्यो हिमाचलोपत्यकाप्रदेशेभ्यो वाऽऽगतैरेव भवितव्यम्। नास्ति हि दूरस्थं समीपस्थं वा राज्यमेकमपि यत् मां प्रति दुर्भाव-नाक्रान्तं मदपहरणोत्सुकं च स्याद्'-इति च। 'दुर्गमवनप्रदेशेभ्यो हिमाचलोपत्यका-प्रदेशेभ्यो वा त आततायिनो मगधराजधान्या एतावत्समीप-अपरिलक्षिता एव कैरपि रक्षकैः—आगन्तुं कथं समर्था बभूवुः, कथं किमर्थंवा राजगृहसमीपवर्तिनि कारागृहे तौ निक्षेप्तुं च'—इत्येतादृशीनां शङ्कानां तु नासीत् तस्य समीपे किमपि समाधानम्।

परन्तु-स दृढं वारं वारं च समादधौ स्वभार्यां मूकां यत्-'तयोः पुत्रः पराक्रमो निर्भीकः कुणीकोऽधिगत्य तयोरपहरणवार्त्ता, द्यावापृथिव्यन्तरिक्षं च विलोडयन् गवेषणायां, नातिचिरादेव तौ नूनमधिगमिष्यति, पारं च गमिष्यति विलक्षणस्य-ननुभूतपूर्वसदृशस्य तस्य संकटस्य स्वप्नोपमस्य'-इति।

CC-0 Pulwama Collection. Digitzed by eGangotri

परन्तु-यथा यथाऽहर्निशं सप्ताहे सप्ताहः पक्षे पक्षो मासे मासस्त्रैमासिके त्रैमासिकः षण्मासेऽपरिणामत युगदीर्घे, न च कापि घटना तयोर्दुरवस्थासमापन क्षमाऽघटत तथा तथा तस्य वृद्धस्य स दृढो विश्वासः, सा प्रबलाऽऽशा, क्रमशः क्षीणाऽभवत्।

मन्द्रेणाऽपि दृढेन सोत्साहेन स्वरेण भार्यायाश्चिन्तामग्नाया उद्बोधनं परित्यज्य सोऽधिकाधिकं तूष्णींभावमेवाभजत। अर्द्धांगिन्या नुद्यमान एव नित्या दैहिकीः क्रियाः कथमपि कुर्वन्, शय्यायामुपविष्टः, शून्येऽन्तराले विमनस्कतया किमपि ध्यायन्नामदिवानिशं ज्वलति कोणदीपज्योतिषि पीताभे बद्ध्वा वा शून्यमनस्कां दृष्टिमारक्ता, समयं यापयामास।

आकर्ण्य वा क्षुद्रमपि ध्वनिं कारागृहाद्बहिर्यत्र कुत्रापि सहसोत्तेजित उत्फुल्लनयनोऽपेक्षया कयाचिन्निःशब्दया प्रवेशद्वारं निध्यातुं प्रचक्रमे। अन्ते च-निराशः स्वात्मनैव साकं किमप्यस्पष्टमस्फुटमपूर्णमनर्थकं गदितुमारेभे।

स्वपत्युः स्वभावे क्रमशः परिलक्ष्यमाणं तदशुभं परिवर्तनमनुभूय, चिन्ता-भराक्रान्ता, मातेव रुग्णस्य, स्वपुत्रस्य, तस्य परिचर्यायामधिकाधिकमवधानं दातुं निरता बभूव तद्धर्मपत्नी।

'यथार्थतो विज्ञाता विपदः सुतार्या भवन्ति' इति मनसि कृत्वा, आतता-यिनां वास्तविकं स्वरूपं, तद्विज्ञातं, तस्य समीपे मृदुशब्दैः प्रकटीकर्तुं च बद्धपरिकरा।

अन्वतिष्ठच्च तथाऽपराह्णे एकस्मिन् सुप्तोत्थितं किञ्चित्स्वस्थचित्तं तं वीक्ष्य।

वृद्धो बिम्बसारस्तु तस्मिन् भूमिगते कक्षे, मध्याह्नेऽपि तिमिरबहुले संतत-प्रज्वलदेकमात्रतैलप्रदीपप्रभासिताभ्यन्तरे निःशब्दे, समीपे समुपविष्टायाः क्लान्त-मुखारविन्दायाः सानुकम्पमिव साश्वासमिव सानुरोधमिव तद्दुर्बलस्कन्धदेश-निहितकृशभुजलतायाः परिक्षामाया भार्यायामुखाद्विज्ञाय तदपहर्तॄणां वास्तविकं स्वरूपं, आदौ तावत् तस्यावचसि न लेशतोऽपि विशश्वास। आकस्मिकविषप-त्प्रहारविचालितायास्तस्याः रुग्णकल्पनाशक्तिमात्रोद्भूतं च तन्मेने। बहुविधानि च कारणानि स आवेगेन दयनीयेन स्वपक्षस्य समर्थनार्थं पुरश्चकार।

यदा तु कोशलदेवी, निशम्य तस्य सावेशं प्रतिवादं, विरतवचसि तस्मिन् परिश्रान्ते फेनिलमुखे तीक्ष्णनयने, परिवर्त्यान्यित्र स्वदृष्टिं क्लान्तां, स्वमतस्य परिपोषार्थं तानि तानि क्षुद्राण्यपि कृते विचारे संसूचकानि प्रमाणानि तयैकत्र-कृतानि सूक्ष्मनिरीक्षणशक्तिमात्रसाहाय्येन, एकैकशः, स्पष्टीचकार, तदा वराक-स्तत्पतिरसमर्थस्तानि खण्डयितुं, प्रतिवादविरतः, क्षामतरमुखमुद्रो, धवलतरकेशः,

CC-0 Pulwama Collection. Digitzed by eGangotri

श्रान्ततरनयनोऽन्ते तत् कटु सत्यंस्वीचकार। आस्त च चिरं मूको, विग्रहवान् पितृपराभवः, सशरीरो वार्द्धकक्लेशः, मूर्तिमान् नैराश्यभावः।

आरभत च लपितुं मन्दं मन्दं, तिक्तं स्मितं स्मयमानः—'एवमेव···एतत्। ···एवमेव।···यथाऽगदस्तथैव तत्। अयं प्राणान्तकः मर्मप्रहार आकस्मिको ऽस्माकमात्मजस्यैव···कुणीकस्यैव। न कस्याऽपि विद्रोहिणः परकीयस्य। न वा कस्याऽपि द्रव्यार्थिन आततायिनः।···अस्माकमजातशत्रोरेव···वैशाल्याः पुत्रस्यैव। एवमेव एतत्।···यथा च यच्च भावि आसीत्···तथैव तदेव भूतम्'।

'अयि !···स्मरसि तस्य प्रसंगस्य···व्यतीतेष्वपि पञ्चत्रिंशद्वर्षेषु सद्योघटितस्येव स्मृतिपटले विषमयैर्वर्णैरालिखितस्य ?'

'समग्रेऽपि मगधराज्ये क्रमशो वर्धमानेषु कुणीकजन्ममहोत्सवेषु परां काष्ठां प्रपन्नेषु, समुल्लसितहृदयोऽहं त्वया मगधयुवराजप्राप्तिप्रमुदितया यवीयस्या च कौतूहलोत्फुल्लनेत्रकमलया पृच्छामुखरया कौतुकचञ्चलया पद्मावत्या च सह तस्मिन् प्रभाते पुत्रमुखकमलप्रथमावलोकनमहोत्सवार्थं वैशाल्याः सूतिकागृहे गत आसम्। तत्र च सूतिकापर्यङ्कमाबद्धविविधरक्षिकं समुपसृत्य तां शान्तां हृष्टां स्निह्यन्त्या दृष्ट्या बहु बहु अभिनन्द्य तस्याः समीप एव सुख प्रसुप्तस्य समुज्ज्वलवर्णेन पत्रोर्णेन यवीयसाऽऽच्छादितस्य चञ्चलोष्ठस्याऽऽबद्धमुष्टिकस्याऽऽरक्तस्य कुणीकस्य मीलितनयनमाननं नयनाभ्यां विस्मृतनिमेषाभ्यां निपीय हर्षमुखरो यत्किञ्चिदपि वात्सल्यमधुरं बहु बहुजल्पन् चिरं स्थित आसम्।

'अन्ते च-तस्य प्रसुप्तस्यैव यवीयसि मणिबन्धे रत्नकङ्कणं, राजवंशचिह्नाङ्कितं यवीय आबध्य,—अनिच्छन्नेव,—'वैशाल्याः श्रान्तायाः श्रमो मा भूत्' इति ततोऽपगत आसम्···आश्वासयन् तां 'आवयोरयं पुत्रकोऽग्रे महान् चक्रवर्ती···महान् सम्राट् भविष्यति।···नास्त्येवात्र संशयः।···श्व एवाहं राजकीयं ज्योतिर्विदमाहूयाऽऽवयोः पुत्रकस्य जन्मपत्रिका कारयिष्यामि तेन।···तन्मुखाच्च तत्फलितं ज्ञात्वा त्वां स्वयं कथयिष्यामीति।'

'अन्येद्युश्च-प्राभातिक एव समये, स्नानपूतौ कृतदेवतार्चनौ आवां तं वृद्धं राजकीयं ज्योतिर्विदमनागतमागतमिव स्पष्टतया परिकलयितुं समर्थं, सादरं, तवैव, देवि !, अन्तःपुर आह्वयाव, सद्योजातस्य मगधयुवराजस्य भाविजीवनविषयै सौत्सुक्यमपृच्छाव च। सोऽपि, चिरप्रतीक्षितदर्शनस्य स्वामिपुत्रस्य भविष्यद्द्रष्टुं ताम्यद्हृदयस्तस्मिन्नेव क्षणे ग्रहगणितव्यापृतचित्तो बभूव। परन्तु-शनैः शनैस्तस्य वृद्धस्य सकौतुका सस्मिता सोत्साहा सा मुखमुद्रा केनचित् कृष्णमेघेनाऽऽक्रम्यमाणेव कयाचिद्दुःशंकया ग्रस्यमानेव विवर्णाऽजायत। बहोः कालादनन्तरमपि, वारं वारं ग्रहस्थितिं परीक्ष्याऽपि यदा स फलितकथनार्थं नोत्सेहे तदाऽऽवां

CC-0 Pulwama Collection. Digitzed by eGangotri

कण्ठगतप्राणाविव निरुद्धश्वासाविवाधीरौ तमसकृदनुरुरुधिवहे। अपारयन् आवयोरनुरोधं ततोऽधिकं समुपेक्षितुं, स खलु प्रसह्य जुगूहाऽऽत्मनो मनोभावनाम्। आरभत च कृतकेनोत्साहेन कथयितुं यत् 'महापुरुष एव युगप्रवर्तको मगधराज कुलेऽवतीर्णः। सर्व एव ग्रहा अर्भकस्यास्य नितरामनुकूलाः प्रबलाश्च द्योतयन्ति यदयं नूनं भारतवर्षस्य समग्रस्य चक्रवर्ती सम्राट् भविष्यति। अस्य स्वयंशूरस्य शूरजनसेवितस्य च स्वयं सुविद्यस्य विद्वज्जनसेवितस्य च कुशलप्रशासकस्य विशालहृदयस्य दानवीरस्यापारैश्वर्यशालिनः कारणात् हर्यंकवंश इतिहासविख्यातो भविष्यति। करिष्यति च नूनं मगधराजवंशप्रस्थापकस्य स्वनामधन्यस्य भट्टीयमहोदयस्य स्वप्नं साकार'मिति।

'तत् तस्य फलितकथनं कर्णाभ्यां निपीय कृतकृत्यावप्यावां, तस्य तां विवर्णां मुखमुद्रां-सुनिगूढामपि-विस्मर्तुमपारयन्तौ, तत्र कौतूहलवशादेकत्रभूतान् सकौतुकं निरुद्धश्वासं भविष्यत्कथनं शृण्वतः परमविश्वसनीयानपि सर्वानेव, परिजनान् तेन तेन मिषेण दूरीकृत्य, तं तत्कारणविषयें भूयोभूयः साग्रहमपृच्छाव।'

'परिकलय्य च यत् ततः परं गोपनं निरर्थकमिति सः स्पष्टमकथयत्- 'राजन्! यद्यन्मयाऽस्यार्भकस्य विषय एतावत्कालपर्यन्तं निवेदितं...तत् तत् सत्यमेव। एक एव तु योगोऽनिष्टोऽस्य जन्मपत्रिकायां योऽन्यथा सर्वोत्कृष्टामेतामत्यन्तं दूषयति। सूचयति नूनमयं यत्-अग्रे रणचण्डो दानवीरश्चक्रवर्ती सम्राट् भूत्वाऽपि राजकुमारो भारतीयेतिहासे 'पितृहन्ता' इति ख्यातिममङ्गलां प्राप्स्यति' इति। ग्रहस्थितिरेव स्पष्टं दर्शयति यदयं बालकोऽग्रे वीरोऽप्यधीरस्वभावः सद्बुद्धिरपि, क्रोधनोऽतिमहत्वाकाङ्क्षी नियतं स्वजनकस्य मृत्योः साक्षात् कारणं भविष्यति इति।'

''अस्तु। अनाकलनीया प्राक्तनगतिः। अवश्यं भोक्तव्यश्च भोगः। तथापि करोतु स्वाम्यचिरादेव शुभे दिने शुभे नक्षत्रे ग्रहशान्तियज्ञम्। भवतु च यावच्छक्यं दक्षः संवेदनक्षमे तीव्रसंवेगेऽस्य चित्ते सुसंस्काराणामाधाने।...किं न संभाव्यते? कदाचिदाधिदैविकानुष्ठानवशान्नियतिरनेन तादृशं महापातकं न कारयेत्! अयमेव वा-आ जन्मन आरोपितानां सुसंस्काराणां प्रभावादुपस्थितास्वपि समुत्तेजनपरासु, परिस्थितिषूभयलोकविरुद्धस्यैतादृशस्य पापस्य करणात् स्वयमेव कथञ्चिन्निवर्तेत-' इति'।

'एवमादि बहु सान्त्वनापरं किमपि किमपि जल्पन् स चिरमास्त। परन्तु-आवांतादृक्...अत्यन्तमनपेक्षितं भविष्यत्कथनं समाकर्ण्य हतबुद्धी किंकर्तव्यविमूढौ, 'किं ततः परं सोऽजल्पत्, कदा वा सः कक्षात्तस्मान्निरगच्छत्'-इत्येतदाकलयितुं न प्राभवाव। चिराच्च कथञ्चित् प्रकृतिमापन्नौ निश्चिक्यिव गूढपरामर्शानन्तरं 'यत्-'यद्भावि तद्भाव्येव, ललाटे लिखितं प्रोज्झितुं न कोऽपि समर्थः।

CC-0 Pulwama Collection. Digitzed by eGangotri

तथापि पितृकर्तव्यमिति ज्योतिर्विदोऽनुरोधं समनुसृत्यार्भकस्यानिष्टग्रहशान्तये यज्ञो विधिविहितोऽचिरादेव कार्यः। तस्य संगोपनेऽध्यापने च विशेषः प्रयत्नः।'

'निश्चयं चाकुर्वाव यत्-'अयं कटुवृत्तान्त आवयोरेव विदितस्तिष्ठतु प्राणान्तपर्यन्तम्। क इव लाभोऽनेन सर्वविदितेन? न कोऽपि। प्रत्युत हानिरेव। वैशाल्यै अपि न सूचनीयः। तस्या हि चिरात् पुत्रमुखकमलमवलोक्य प्रमुदितायाः वराक्याः प्रमोदः निशम्य नूनमिमं वृत्तान्तं नितरां विलीयेत। तज्जीवनं च शरीरपातपर्यन्तं दुःखेनान्तर्गूढघनव्यथेन ग्रस्येत-' इति।

'तदनुसारं चैतानि पंचत्रिंशद्वर्षाण्यावामवर्ताविहि। आ बाल्यादेव कुणीकस्य संगोपने विशेषतो दत्तचित्ताभ्यामावाभ्यां स यथाऽत्यधिकेन स्नेहेन न दूष्येत, तथा प्रयतितम्। तस्य मातरं प्रसंगविशेषेषु पीडयित्वाऽपि। स यथोच्छृंखलानां सामन्तपुत्राणां धनिकवणिक्पुत्राणां वा सम्पर्कवशात् तथैव न विपरिणमेत तथा प्रयतितम्। जनन्याः निरतिशयस्वाभाविकस्नेहच्छायायां स कदाचिदन्यथा परिणमेत इति विचिन्त्य समवधीर्यवैशाल्या वराक्या दुर्बलं प्रतिरोधमावाभ्यां सः नियमकठोरे तक्षशिलासदृशे विख्याते विद्यापीठेऽपि प्रेषितः स्थापितश्च द्वादशवर्षपर्यन्तं निरन्तरम्।

'परन्तु-यद्भावि तद्भाव्येव।...कृतेष्वपि संततेषु प्रयत्नेषु कुणीकः नियतिनिर्धारितया दिशैव प्रतिपलं वर्धमान आवाभ्यां परिलक्षितः।...सद्बुद्धिरप्यतिक्रोधनः। वीरोऽप्यधीरः। निर्मर्यादमहत्वाकांक्षी। अहंमन्यः। अहं तु तस्मात् वृद्धकूटदन्तकाण्डदारभ्यैव तस्य विषये नैराश्यमिवानुभवितुमारेभे। तवैव च, मातुः स्वभावमनुसृत्य सततं शुभमुत्प्रेक्षमाणाया, औद्धत्यपूर्णं तस्य वर्तनं बालस्वभावसुलभमिति तत्तितिक्षापराया, उदारहृदयायाः संततानुरोधवशात् प्रयत्नेभ्यः न व्यरमम्। विद्यापीठात् प्रत्यागतस्य तस्य महाप्रमाणं बलिष्ठं वपुस्तत्रार्जिता गुणसंपदो विनीतमाचरणमवलोक्य सत्यमेव प्रभावितः सत्यमेव विश्वसन् तस्य सवकल्याणकारिणि उदर्के, तं मगधयौवराज्येऽभिषिञ्चम्। अयच्छं चाङ्गदेशप्रशासनस्य भारम्। परन्तु-अचिरादेव तस्य जन्मसिद्धः निर्मर्यादमहत्वाकांक्षी स्वभावो विजित्य तस्य नम्रतामात्मानं प्रकटयितुमारभत। नितान्तं निरपेक्ष इव प्रतिस्पर्द्धी नृप इव विजिगीषुरिव, पैतृकं राज्यं सेनासंनाहं कर्तुमारभत। पित्रोरन्तःपुर एव गूढचारजालं च प्रसारयितुम्।'

'यदा चैतदसह्यमभवत् तदाऽहं...हल्लमेव...मगधराज्योत्तराधिकारिणं समुद्घोषयितुं प्रवृत्तोऽभवम्। अशक्नुवन् तु समवधीरयितुं वराक्या वैशाल्या दीनां प्रार्थनामेकमवसरं स्ववर्तनपरिशोधनार्थं तस्मै अदाम्।

'अनुशयान्वितश्च सः स्वव्यवहारं तदनन्तरं नम्रं व्यधात्।'

CC-0 Pulwama Collection. Digitzed by eGangotri

'अथवा-नानुशयान्वितः…अपि तु तदाभासान्वितः। अहो ! वञ्चितोऽस्मि स्वात्मजेनैव।…देवि।…मातुः सकाशाद्विज्ञायाऽऽवयोः संकल्पं, स न वस्तुतोऽनुततापः,…अपि तु सर्प इव पादस्पृष्टः नितरां क्रुद्धस्तन्मार्गकंटकयोरावयोर्दूरीकरणार्थमनुतापमभिनिनाय। आवां च तस्य तेन कुटिलेनाभिनयेन लुण्ठितमती प्रसृते तस्य कपटजालेऽपताव। अहो, तस्य नैपुण्यं कपटप्रयोगे यत्त्वयाऽपि महामात्येनाप्यस्माकं गूढपुरुषैरपि स नालक्षि। अथवा, भवितव्यस्य द्वारं भवति सर्वत्र। एवमेतत्।…एतद्भावि आसीत्। अतो भूतमेव।'

'अथवा…अथवा…न भूतम्। देवि ! अद्याप्यस्त्यवसरः कुणीकं पितृहत्यामहापातकाद्रक्षितुम्। अधीरेण तेन खलु पैतृकराज्यप्राप्तौ विघ्नभावाभ्यां समुत्प्रेक्षमाणेन कारागृहेऽस्मिन् आवां निक्षिप्तौ। प्राणैस्तु न वियोजितौ। पित्रोः कारागृहे निक्षेपः कस्याप्यार्यस्य कृते कलङ्क इत्यत्र न संशयः। परन्तु न तावान् भीषणः कलङ्को यावान् तयोः प्राणवियोजनेन समुद्भवेत्।'

'तत्…तत्…कुणीक आवाभ्यां तस्मात् कलंकाद्रक्षितव्यः।'

(सास्रं) 'नाहमिच्छामि स्ववंशं पितृघातकेन पुत्रेण कलङ्कितं द्रष्टुम्। तन्मन्ये कारागृहेऽस्मिन् आवामस्य जीवनहतकस्य समाप्तिर्यावन्न भवति (-साऽपि सौभाग्यवशान्नातिदूर इव लक्ष्यते-) तावत् सुखं वत्स्यावः।'

अधिगच्छतु कुणीका मगधराज्यम्।… (विषण्णं विहस्य) पैतृकं हि तत्तस्मै समीपागतायामक्षय्यतिथौ दातुं मया निर्धारितमेवाऽऽसीत्। अधीरः स यदि तावत्कालपर्यन्तं प्रतीक्षां कर्तुं न समर्थस्तर्हि तत्तस्य अस्तु नाम ततः प्रागेव।… आवयोर्नास्ति स्वल्पोऽपि क्लेशोऽत्र। न च स्याद्राजगृहे वैशाल्याः क्षेमाया वा,… हल्लस्य वेहल्लस्य वा।… कुणीको हि तृप्ताहंभावस्तान् न लेशतोऽपि क्लेशयिष्यति।'

'तन्मन्ये—कारागृहेऽत्र…कृष्णगृहे नूनम्…आवां सुखेनैवेतः परं वत्स्यावः।

'कथं नाम…अस्माकं महाराज्ञी…मन्यते ?'

महाराज्ञी तु विज्ञाय वास्तविकमाततायिनं विविधभावनाऽऽलोडितान्तःकरणस्यादौ हताशस्य ततः समृतिमग्नस्य तत उद्विग्नस्य ततः पश्चात्तापतप्तस्यान्ते च 'नियत्या कुणीकः पितृघातसदृशान्महापातकाद्रक्षित' इत्येतेन बालिशेन विचारेणैव समुल्लसितचित्तस्य स्वभर्तुः प्रश्नमिमं श्रुत्वा तदाननान् स्फुरन्नासिकापुटात् प्रदीप्तनयनात् परिवर्त्य दृष्टिं शून्यां…तां…मन्दं मन्दं ज्वलति दीपज्योतिषि बबन्ध-मूका।

CC-0 Pulwama Collection. Digitzed by eGangotri

## चतुर्दशः परिच्छेदः

अन्यस्मादिव लोकादस्फुटमुदासीनमागच्छन्तं प्रहरघण्टारवमाकर्ण्याकस्माच्छिन्नतन्द्रा कोशलदेवी, दुःस्वप्नात् कस्माच्चित् सहसा प्रबोधितेव, विस्फारिताऽऽरक्तनयना, स्वशय्यायामुत्थाय तस्थौ···सावधानतया शृण्वतीव कस्यचित् पदरवम्। क्षणमात्रानन्तरमेव च विज्ञाय स्वभ्रान्तिं निराशा, समीपे पर्यङ्के सुप्तस्य पत्युर्मुखे दीपप्रभालोकितस्वर्णिमधवलकेशाच्छन्नप्राये श्रान्ते दृष्टिं विनिद्रां व्यापारयामास।

वलितं परिक्षामं कृष्णवलयावृतनिमीलितनयनं तत् खिन्नया स्नेहसिक्तया दृष्ट्या ध्यायन्ती च चिन्तयामास—

'श्रान्ततर इव क्षीणतर इव लक्ष्यतेऽयमेषु दिवसेषु।···किमवदत् अयं तदानीं विज्ञायाऽऽततायिनः स्वरूपं वास्तविकम् ?···'अस्य जीवनहतकस्य समाप्तिर्भाग्यवशान्नातिदूर इव लक्ष्यत' इति ? यथा यथाऽस्मिन् जीवितसमाधिस्थले कालो व्यत्येति तथा तथाऽयं दुर्बलतरोऽप्यधिकमेव सोत्साह इव लक्ष्यते,··· प्रतिपलं निलयं समीपतरमुत्प्रेक्षमाणोऽनवरतप्रवासपरिश्रान्तगात्रश्चिरपथिक इव। कृतकृत्य इव। कृतस्वस्तिवाचन इव।···एषु दिवसेषु···अयमतीतजीवीव लक्ष्यते। विस्मृत्य वर्तमानं सदा भूतकाल एव वर्तमानोऽयमतीतानामेव स्मरति दिनानाम्। तत्रापि सुखमयानामेव। क्षमित्वेव स्वपुत्रं, स्नेहातिरेकेण तस्यैव स्मरति। तत्रापि तस्य निरागसमधुराणां बालचेष्टानाम्। तस्य जन्मन आरभ्य षड्त्रिंशद्वर्षपर्यन्तं प्रतिक्षणमनुभूतं दुःशङ्काभारमकस्याद्व्यपगतं साक्षात्कृत्य कृतार्थमिव धन्यमिव···समुपकृतमिव नियत्याऽऽत्मानं मन्यते।'

'किं सत्यमेवायं···इतो महाप्रस्थानमासन्नप्रायं परिलक्षयते ? अस्यां परिस्थितौ···अस्मात् जीवितसमाधिगृहात्···प्रस्थानं···महाप्रस्थानं कर्तुमयमेवं समुत्सुकः ? न दूयतेऽस्य चेतः प्राणाधिकप्रियां स्नेहमयीं पुत्रीमभिन्नहृदयं सुहृदं कोशलराजं चापृष्ट्वा···इतः जिगमिषोः ? सत्यमेवायं···एतावान् निर्ममः संजातो यद्द्विसप्तति-त्रिप्रतिवर्षपर्यन्तमसंख्यानां सेवकानां मित्राणामाप्तजनानां च स्नेहतृष्टिमनुभूय···इतः प्रस्थानसमये आत्मानं मयैव केवलया छाययेव सुखदुःखानुगामिन्या परिवृतं वीक्ष्याऽपि न लेशतोऽपि खिद्यते ?···नहि।···नहि। दूयत

CC-0 Pulwama Collection. Digitzed by eGangotri

एवाऽस्य चेतः। खिद्यत एवायं प्रतिपलम् अस्य मुखमुद्रैव श्रान्ता क्लान्ता गुह्य-मेतत् प्रकटयति। अयमस्य जागरितस्योत्साह···एतत् समाधानं तु कृत्रिमम्। ···मदर्थमेतत्।···प्रयासोऽयमस्य मां समाश्वासयितुम्। परिश्रमोऽयमस्य भास-यितुं—'अस्माल्लोकात् गन्तुमुद्यतस्य मम मनसि नास्ति क्लेशलेशोऽपि' इति। अहो मम मौर्ख्यम्! एतदभिन्नहृदयमात्मानं सगर्वं मन्यमानाऽप्यस्येमं करुण-मभिनयं यथार्थतया नाजानामेतावत्कालपर्यन्तम्। अहो मम मौर्ख्यम्!'

सहसा सा स्वपर्यंकादुदतिष्ठत्। निःशब्दं च पत्युः समीपे गत्वा समुपविश्य च तत्संनिधौ विश्रब्धं शयानस्य तस्य भालप्रदेशमुष्णं करतलेन शनैः शनैः परा-म्रष्टुमारभत।

'न त्वयाऽग्निसमक्षं मम पाणिं गृह्णता सुखदुःखसहभोगाय क्षुद्रमपि सुखं दुःखं वा मत्सकाशात् निह्नुत्य कदाचिदप्युपभुक्तम्। तत् किमिति···आवयोः जीवितावसानकाले समासन्नप्राये प्राणान्तकारि दुःखमेतदेकाकी एव उपभुङ्क्षे? ···किं मन्यसे-वराकीयं···आदित एव दुःखभारभुग्ना प्रियजनविप्रयुक्ता सोढु-मेतन्न शक्ष्यतीति? अयि, त्वयि संनिहिते सति···अहमेतेन सदृशानि दुःख-सहस्राणि सोढुं समर्था। नारी हि···सर्वंसहा···भूरिव।'

'अथवा···किमिति कालमतिवाहयामि वृथालापैरेतैः?···नाहमेनं···एवं दुःखभारभुग्नं लोकादस्मात् प्रयान्तं मूकेव बधिरेव निर्वीर्येव निष्प्राणेवावलोक-यिष्यामि···अनुगमिष्यामि च।···मम कारणादस्येयं दशा सञ्जाता। अहं··· एनं···अस्या मोचयिष्यामि।'

विचिन्तयन्ती चैवं सहसा सा पत्युः पर्यङ्कादुदतिष्ठत्। सावेगं च कारा-कक्षनिर्गमद्वारमुपसृत्य तल्लोहशलाका दृढाः पल्लवपेशलाभ्यां करतलाभ्यां विधृत्य, प्रयतमानेव तद्बलादुद्घाटयितुं, विचारमग्नाभ्यां जागरणाऽऽरक्ताभ्यां ज्वलद्भ्यामिव लोचनाभ्यां बहिः सर्वत्र प्रसृते तमसि मुक्त्युपायमिवावलोकयन्ती पुनश्चिन्तयामास—

'अहमेनं मोचयिष्यामि···न पुनः राज्यसुखोपभोगं लम्भयितुम्। चिरं··· अतिचिरं खलूपभुक्तमावाभ्यां राज्यसुखम्। साक्षात्कृतं च—तत् सुखं कियत् सुखमिति।···न तत् काङ्क्षामि···आवयोः कृतेऽन्यस्मिन्नपि जन्मनि। तत्कारणा-देव···आवयोरियं दुरवस्था। न कुणोकं दण्डयितुम्। स हि प्राक्तनकर्मवशात् तथाऽपरराध।···यश्च सर्वोच्चः दण्डधारकः···सः···तस्य दण्डं विचारयिष्यति। अहं···एनं···मोचयिष्यामि-भवतु आवयोरस्य दीर्घदीर्घस्य जीवननाटकस्यान्तः··· नास्मिन् अन्धकूपे···निःस्नेहे काराकक्षे···अपि तु···आश्रमस्थानस्य कस्यचित् प्रशान्ते कुटीरे···गदत्सु स्नेहविह्वलेषु···सेवकेषु···सुहृत्सु···इष्टजनेषु आप्त-

CC-0 Pulwama Collection. Digitzed by eGangotri

जनेषु साश्रुभिः नेत्रैः प्रस्फुरद्भिः ओष्ठपुटैः 'शुभाः युवयोः पन्थानः सन्तु, शुभाः युवयोः पन्थानः सन्तु' इति ।'

'तत् कथमेनं मोचयिष्यामि ?'

चिन्तयन्ती चैवं सा चिरमतिष्ठत् तथैव । अन्ते च, विनिश्चित्येव किमपि, विनिश्चित्येव कार्यपद्धतिं, दृढतरमुखमुद्रा शनैः शनैः स्वपर्यङ्कं प्रतिन्यवर्तत । चिरं निपीय च श्रान्ताभ्यां नयनाभ्यां तथैव प्रसुप्तस्य पत्युः वलितं परिक्षाममाननं शयनपतिता, तदभिमुखा एव, निद्राया अशरणशरण्याया अंके सुष्वाप··· प्रसरति प्रहरघण्टारवे ब्राह्ममुहूर्तसंसूचके ।

तद्दिनादारभ्य सा 'सुगोपितमनोभिप्राया, पतिमिवाऽऽत्मानमपि काराकक्ष एव जीवितावशेषं यापयितुमुद्यतं प्रकटयन्ती, निरुद्वेगं निश्चिन्तं चात्मानं प्रकाशयन्ती, निर्धारितायाः कार्यपद्धतेरेव विषये वस्तुतश्चिन्तयन्ती, शनैः शनैः पदानि तद्दिशामनुसृत्य निक्षेप्तुमारभत ।

सर्वप्रथमं सा···तयोः सेवायां संलग्नां तां वृद्धां पलितकेशां जीर्णमलिनवेषां दासीं, तस्या अनुपस्थितौ च तत्सेवाकार्यसम्पादनार्थं कदाचिदागच्छन्तं वृद्धमपि चतुरं तस्याः पतिं च, स्नेहशीलेन वर्तनेनानुपभुक्तविविधभोज्यपदार्थप्रदानेन च स्वानुकूलीकर्तुं प्रचक्रमे ।

लेभे च साफल्यमनुकूलप्राक्तनवशात् । दयनीयौ वार्धकविक्लवौ अज्ञातकुलशीलावपि स्फुटपरिलक्ष्यमाणमहाकुलसम्भवौ निरपराधमेव काराकक्षे निक्षिप्तौ कोमलस्वभावौ तौ प्रत्यहं वीक्ष्य समुपजातदयौ तौ सेवकदम्पती हि नातिचिरादेव तस्या अनुकूलीबभूवतुः ।

तौ च तथाविधावनुभूय सा शनैः शनैस्तन्निकटे स्वदुःखगाथां कपोलकल्पितामुद्घाटयितुमारभत । महाकुलसम्भूतमपि मगधराजवंशपरमभक्तमपि स्वपतिं बकधूर्तसेवकजनपरिलुण्ठितसमस्तवैभवं राजस्वदानासमर्थं कुपितैः राजपुरुषैः कारागृहे तथा निक्षिप्तमात्मानं चैकाकिनस्तस्य परिचर्यार्थं स्वयमेव कारागृहे महताऽनुरोधेन लब्धप्रवेशं प्रकटीचकार । अयाचत च तयोः साहाय्यं कस्यापि विश्वसनीयस्य कार्यचतुरस्य दूतस्य प्राप्तौ···यस्य माध्यमेन सा कोशलराजधानीस्थितं भर्तुः परमविश्वसनीयं सुहृदं सामन्तमेकं तयोर्दयनीयामवस्थां संसूच्याऽऽर्थिकसाहाय्यदानार्थं विज्ञापयितुं शक्नुयात् ।

तौ तु कारापालभीतावपि तद्याचनां दीनदीनामवधीरयितुमसमर्थौ कथमपि तथा कर्तुं स्वीकृत्याचिरादेव,—वृद्धयोर्दुर्बलयोः हताशयोः राज्ञा सर्वथा समुपेक्षितयोः दम्पत्योर्विषये निःशङ्कानां स्वकार्यरतानां रक्षकपुरुषाणां,—पाटलि-

CC-0 Pulwama Collection. Digitzed by eGangotri

ग्रामस्थमेकं सुपरिचितं चतुरमतिं ग्रामीणं वृद्धस्य दुर्बलस्य सेवकान्तरस्य छद्मवेषेण तस्याः सेवायामुपस्थापयामासतुः।

सोऽपि, प्रथमादृष्टिपात एवाभिज्ञाय तस्य चातुर्यं विश्वस्ताऽऽदित एवानुकूलं तं कोशलराजधानीं गत्वा तन्निर्दिष्टं सामन्तविशेषं च दृष्ट्वा…'तत्स्नेहवशंवदौ वृद्धौ मागधौ कौचित् दंपती पाटलिग्रामदुर्गे जीवितावसानं निर्विण्णौ प्रतीक्षेते। तत्तौ साहाय्यप्रदानेन यावच्छक्येनानुग्रहणीयौ—' इति मौखिकं संदेशं तं रहसि श्रावयितुमुद्यतमकरोत् प्रभूतपारितोषिकप्रदानप्रलोभनेन।

सोऽपि पाटलिग्रामादनुकूलं समयं दृष्ट्वा निर्गतो धृतव्याघ्रचर्मवणिग्वेषः स्वैरं प्रवसन् शीघ्रमेव कोशलराजधानीं प्राप। अदृष्टपूर्वतद्वैभवमुषितहृदयोऽपि प्रकृतिमचिरादेवाऽऽपन्नो विक्रेयवस्तुप्रदर्शनापदेशेन तस्य सामन्तस्य सेवायामुपस्थितश्च रहसि तं संदेशमश्रावयत्।

सः सामन्तस्तु सर्वथाऽनपेक्षितं गूढमसंबद्धप्रायं तं संदेशमाकर्ण्य विस्मयान्वितः, 'कौ नाम वृद्धौ मागधौ दंपती मम स्नेहिनौ तस्मिन् दुर्गकल्पे प्रासादे क्लाम्यत' इति सहसा विनिश्चेतुमपारयन्, तं वणिग्व्यपदेशिनं सविस्तरमपृच्छत्। तस्माच्च वास्तविकपरिस्थित्यनभिज्ञादपि विज्ञाय तयोर्वृद्धयोः जंपत्योः स्वरूपं समुपजातशङ्कस्तं राजधान्याः नातिप्रसिद्धे पथिकवणिग्विश्रामगृह एकस्मिन् वस्तुं तं च पुनरप्यन्येद्युः द्रष्टुं समादिश्य विससर्ज।

स्वयं च तत्कालमेव कोशलराजं स्वामिनं प्रसेनजितं साक्षात्कर्तुं चचाल। उपातिष्ठत च बद्धाञ्जलिः शीघ्रमेव स्वामिनो वृद्धस्यापि बलिष्ठस्यापि महाप्रमाणस्य गौराऽऽरक्तवर्णस्य तीक्ष्णदृष्टेः…समुपविश्याऽऽसंद्यां चन्दनदारुनिर्मितायां चन्द्रिकाधवलमहार्हचीनांशुकप्रच्छदाऽऽस्तृतायां राजस्वमहामात्येन प्रेषितान् सामयिकान् वृत्तान्तान् कांश्चित् विमनस्कतया परीक्षमाणस्य…क्लान्तमुखमुद्रस्यैकाकिन समक्षम्।

तेन च, मगधराजापहरणकाण्डात्प्रभृत्येकान्तमेवाधिकांधिकं भजमानेन, यावच्छक्यं साधारणजनसम्पर्कं परिहरता, विपरीतास्वप्याज्ञासु साग्रहं साभिनिवेशं पुनः पुनः याचित्वा तद्दर्शनावसरं सेवायामुपस्थितं परमविश्वसनीयं सामन्तं समुत्तेजितमुखमुद्रमवलोक्य किञ्चित् कौतूहलान्वितेन, समनुज्ञात इंगितेन, समीपतमवर्तिनि आसने समुपविवेश। निवेदयामास च विनम्रदृष्टिः सद्यः प्राप्तं त गूढं सन्देशं-स्वात्मनः शंकां च-मन्द्रं मन्द्रम्।

कोशलराजस्तु, श्रुत्वैव तं संदेशं सावधानस्तीक्ष्णतरदृष्टिः, एकाग्रं तमवलोकयन्, तस्मिन्नेव क्षणे यथाथमर्थं संदेशस्य तस्य व्यजानात्। निमेषमात्र एव

CC-0 Pulwama Collection. Digitzed by eGangotri

विलीनौदासीन्यश्च, व्यपगतापराधबोध इव विकसितचित्तः प्रत्यागततारुण्य इव सोत्साहः, संयम्याऽऽत्मानं कथञ्चित् तं सविस्तरमपृच्छत्। विदितवेद्यश्च तं सायंसमये...उच्चरति सर्वतः पटुप्रहण्यमानसान्ध्यपटहध्वनौ...पुनरागमनाय समादिशत्।

अपगते च तस्मिन्, समुत्थाय आसंद्या, धीरगभ्भीरया गत्या पुरुषप्रमाणस्य वातायनस्य समीपे गत्वा, बहिरवलोकयन् प्रासादाऽभ्यन्तराऽऽरामशोभां किल, विमनस्कः, प्रविशन्मन्दवातलहरीप्रकम्प्यमानधवलबिसतन्तुमृदुलकेशश्चिन्तयितु-मारभत।

'एवमेवैतत्। यथा खलु मयाऽऽदित एवाऽऽशङ्कितमासीत् तथैव तद्घटितं परिलक्ष्यते। मगधराजवान्याः "राजगृहस्य" एतावत्समीपे सर्वतः स्नेहशीलपर राज्याऽऽवृते...भागीरथीतीरे "सुदूरात् हिमाचलोपत्यकावर्तिनोऽराजकप्रायात् प्रदेशादाततायिनां निराबाधः प्रवेशः, मगधराजसदृशस्य पुरुषविशेषस्याप्रतिरोधोऽपहारः, ततश्च कैरपि ग्रामीणैः रक्षकैर्वाऽपरिलक्षितः निष्क्रमः,...सर्वथाऽसम्भवनीय एवाऽऽसीत्। परन्तु—तेनाजातशत्रुणा तत् कपटजालमेतावता कौशल्येन नूनमुतं, तत् षड्यन्त्रमेतावता चातुर्येण रचितं, यदाशङ्कमानोऽप्यहमेकाकी समर्थकप्रमाणाभावात् किञ्चिदपि कर्तुं न प्राभवम्। असहाय एव तस्य तत् गवेषणाकपटनाटकं मूकप्रेक्षकवदवलोकयितुं बाध्योऽभवम्।'

'अहो निर्घृणताऽजातशत्रोः। एवं साक्षात् स्वजनकं...निराशङ्कं वृद्धमेकाकिनमसहायं...वज्रपातसंनिभया रीत्याऽपहरता, जीवन्तमेव समाधिगृह इव कारागृहे निक्षिपता तेन...न नूनमैहिकादपवादात् भीतं...न पारलौकिकाद्दण्डात्। क इवोपकारस्तेन वंशस्य राज्यस्य वा पराक्रमशालिनाऽपि बलिष्ठेनापि शस्त्र-शास्त्रनिष्णातेनापि प्रशासनचतुरेणाऽपि...एवं वज्रहृदयेन...एवं निर्घृणेन...एवं घोरकर्मणा?...तस्यापेक्षया त्वयमस्माकं विरुद्धक एव...ऐंद्रियसुखलोलुपोऽपि निस्तेजस्कोऽपि दुर्बलमतिरपि...एवं किमपि कर्तुमनुत्सुको...वरीयान्।'

'अथवा (विषण्णं विहस्य) विरुद्धकस्याप्यन्तस्तलं केन विलोडितम्?...सोऽपि...एवंविधमेवोभयलोकविरोधि कृत्यं न कुर्यादित्यत्र क इवाऽऽश्वासः?...अतर्क्या खलु मानवमनोगतिः। केन खलु समुत्प्रेक्षितमासीद्यत् प्राप्तप्रायं पैतृकं राज्यं प्राप्तुमेतावान् अधारोऽयमजातशत्रुरेवं चेष्टेत—इति?...अथवा—भवितव्यतैवासीदेतादृशी। अन्यथा—सदा दक्षः सर्वतः प्रसृतचारजालो मगधराजस्तस्मिन्नेवावसरे तादृशेनाल्पेन विश्वासद्रोहिणा बलेन सहित...इहाऽऽगमनार्थं न प्रास्थास्यत "अबोधः शिशुरिव।'

'अस्तु तावत्।...प्राप्तस्य गतिश्चिन्तनीया।'

CC-0 Pulwama Collection. Digitzed by eGangotri

'तत् किं पापमेतत् तस्य घुषित्वा समुत्पादयित्वा मगधराज्ये कोशलदेशे जनसामान्यसंक्षोभं—प्रसह्य पाटलिग्रामदुर्गमवरुणधानि ?···युध्यै मगधसेनया सह ?···मोचयानि प्राणाधिकं सुहृदं भगिनीं च प्रियतमाम् ?···युद्धे तु तादृशे विजयो ममैवावश्यंभावी मगधसेना हि विज्ञाय मगधयुवराजस्य तादृशं कपटाचरणं···विद्रुह्येत् । भयवशात्तथा कर्तुमपारयन्त्यपि वा निष्प्राणेव गलितगात्रेव युध्येत । मया चान्यमित्रसेनोपबृंहितसामर्थ्येन जय्यैव भवेत् ।'

'परन्तु···परन्तु···अस्ति नूनमस्यां कार्यपद्धतौ एका महती विपदाशङ्का । मया धृष्टं दुष्टं तादृशमपवादं निराकर्तुं युद्धे वा पराभवमासन्नप्रायमुत्प्रेक्ष्य···स नष्टमतिः वराकं बिम्बसारं कोशलदेवीं च तथा नामशेषौ कुर्याद्यथा न केवलं मम सर्वः प्रयासो व्यर्थतामीयादपि त्वह् भाग्यमात्रेणैवेतावत् कालपर्यन्तं संरक्षितस्य भगिनीपतेः भगिन्याश्च प्राणापहारनैमित्यकलङ्कमवाप्नुयां चिरस्थायिनम् ।··· तत्सदृशस्याधीरस्य प्रचण्डकोपस्याऽऽततायिनः कृते नैतदशक्यम् ।

'तन्मन्ये-शठं प्रति शाठ्यमेवावलम्बनीयम् ।···यथा हि तेन स्वां कुटिलमतिमनुसरता समुत्पाद्य विश्रम्भं परिहृत्य साधारणजनशङ्कामदत्त्वैव सार्वजनीनक्षोभायावसरं निराशङ्कः निष्पापः निष्कपटः सुहृन्मम महता कौशल्येनापहृतः निक्षिप्तश्च कारागृहे तथाऽहमपि समुत्पाद्य तस्य पापमतेर्मनसि विश्रम्भमनुत्तेज्यैव साधारणजनमानसं तं चातुर्येणैव केवलेन मोचयिष्यामि ।'

इयमेव कार्यपद्धतिः परिस्थितावस्यां समीचीना । इमामेवानुसरन् अहं-अनुकूले विधौ-तौ अक्षतौ मोचयितुं प्रभवेयम् । तयोः मम संनिधौ सकुशलं प्राप्तयोस्तु सतोः···विदित्वा तयोरभिप्रायम्···अहं तं कुलकलङ्कं दण्डयितुं प्रवर्तिष्ये ।'

चिंतयन्नेव स इत्थं, भाविकूटप्रत्यपहरणयोजनाविशेषान् तांस्तान् पर्यालोचयन्, चिरं मूर्तिवत्तस्थौ । अन्ते च—कृतनिश्चय इव ततो विनिवृत्तः, कार्यारम्भे समुत्सुकः, प्रतिहारिमुखेन तं सामन्तं तस्मिन्नेव क्षणे आह्वयत । तं च सत्वरं सेवायामुपस्थितं सावधानं संकल्पिताया योजनाया विशेषान् अचकथत् । अत्यल्पस्य च कार्यकुशलस्य सहकारिबलस्य साहाय्येन तान् कार्यान्वितान् कर्तुं समुपलब्धे एव योग्यतमेऽवसरे-समादिदेश ।

सोऽपि, स्वामाशङ्कां यथार्थां परिनिष्पन्नामवलोक्य समुद्विग्नः, निष्कारणमेव पीड्यमानयोर्वृद्धयोः राजदम्पत्योः परिमोचनार्थं कृतनिश्चयः, स्वामिना निर्धारितां कार्यपद्धतिमेव तस्मिन् विलक्षणेऽवसरे समुपयुक्तां मन्यमानः, कोशलराजस्याऽऽज्ञां शिरसा स्वीचकार । प्रतिनिवृत्तश्च स्वनिवासं, सुविचार्य, योग्यतमस्य तत्परिचितस्य गूढस्य पुरुषस्यैकस्य तद्भार्यायाश्च चतुराया धीरायाः

CC-0 Pulwama Collection. Digitized by eGangotri

स्कन्धयोस्तमतिकठिनं कार्यभारं न्यसितुं निश्चिकाय। तौ च समाहूय सादरं, रहसि, सविस्तरं निर्देशान् ददौ।

तावपि साक्षात्कृतकार्यगौरवौ, अपरेद्युः, यथाऽऽदेशं सेवायामुपस्थितेन तेन कृतकवणिजा 'पाटलिग्रामदुर्गं क्लाम्यन्तौ दम्पती साक्षात्कृत्य प्रदेयं राजस्वराशिं ताभ्यां विज्ञाय तदनन्तरमेव तयोर्मोचनाय प्रयत्नः कर्तुं शक्यः अतोऽयमस्माकं भृत्यः-अस्यैव भार्या च-द्वावप्येतौ धृतसाधारणपथिकवेषौ त्वामितः पाटलिग्रामं प्रतिनिवर्तमानं-यदृच्छयेव-अनुगमिष्यतः तौ त्वया तयोर्वृद्धयोः दम्पत्योः सेवायां निरताभ्यां ताभ्यां सेवकजायापतिभ्यां परिचितौ कर्तव्यौ। ततः परं तु यत् कर्तव्यं तदेतावेव करिष्येत-' इति स्वामिना परिचयं कारितौ, तस्मिन्नेव दिने प्रातिष्ठातां कृतवेषपरिवर्तौ।

तमनुसरन्तौ च राजगृहाभिमुखसार्थान्यतमौ सन्धिमनुकूलमुपलभ्यैव ततः पृथग्भूतौ यदृच्छयेव शीघ्रमेव पाटलिग्राममाजग्मतुः। तत्र च तेन योग्यमवसरं वीक्ष्य साप्ताहिकाऽऽपणजनसंमर्दे मगधराजदम्पतीसेवानिरताभ्यां ताभ्यां सेवकजम्पतीभ्यां परिचयमापादितौ, तयोरनुमत्या, शीघ्रमेव तत्सम्बन्धिव्यपदेशेन दुर्गप्रासादपरिसरान्तर्वर्तिनि तदावासे वस्तुं, शनैः शनैः कारागाररक्षाधिकृतैः सैनिकैः सह परिचयं याहच्छिकं वृद्धस्वभावसुलभं संवर्द्धयितुं, संवृद्धे च तस्मिन् वार्धकवशात् रुग्णशय्यायां पतितयोः वृद्धयोस्तयोः सेवकयोः साहाय्यार्थं किल… अनिच्छन्ताविव…कादाचित्केष्ववसरेषु राजकीयबन्दिनोः परिचर्यार्थं स्वयमेव गन्तुं च—आरेभाते।

एकदा चोच्छिष्टभोजनपात्रापनयनमिषेण काराकक्षं प्रविष्टौ,-अनवहितेषु माध्यान्दिनतन्द्रालसालसेषु बहिःस्थितेषु,-रक्षकसैनिकेषु, प्रसुप्तं मगधराजं वीक्ष्य, कोशलदेव्यै प्रतीक्षाक्लान्तायै स्वं यथार्थं स्वरूपं कोशलराजस्य गूढं सन्देशं संकल्पितस्य निष्क्रमणस्य विशेषांश्च निवेदयांचक्राते।

तत्क्षणमेव बिलीनौदासीन्यया, नारीस्वभावानुसारं मुक्तप्राय-मेवाऽऽत्मनो भर्तारं परिकल्पयन्त्या, सोत्साहया तयाऽनुज्ञातौ च…अनुकूलमवसरं प्रतीक्षाञ्चक्राते।

लेभाते च तमचिरादेव।

CC-0 Pulwama Collection. Digitzed by eGangotri

## पञ्चदशः परिच्छेदः

अचिरादेव ह्येकस्मिन् अपराह्णे, वारं वारमवलोक्य दुर्दैविन्याः कोशलदेव्या वैफल्यशप्तं मनोरथाऽऽयासं म्लानमिव दिनमणिबिम्बम्, अकाल इवास्तं जिगमिषु पश्चिमाशावलम्बि अजातशत्रोः पापसम्भारेणेव मूर्तिमता, कज्जलमयेनेवातिकृष्णेन पीतविद्युल्लताताण्डवभीषणेन विविधभयङ्कराऽऽकारधारिणा मेघाडम्बरेण, विश्वासघातिनोऽस्य 'सर्गस्यान्तमिव कर्तुं विधात्रा प्रेषितेन, पश्चिमक्षितिजतलाद्वेगेनोदेष्यता, न्यगीर्यत ।

आक्रम्यत च समस्तमेव जगतीतलं···अकालसामर्थ्योदग्रे णाङ्गानीव चराचरस्य लिम्पता कालिम्ना,' 'अञ्जनमिव वर्षता नभसः, अन्धमिव कुर्वता प्रसह्य समस्तप्राणिजातं, 'युगान्तकालप्रतिसंहृत'विश्वप्रपञ्चस्य श्रीनारायणस्योदरे वासमिवानुभावयता, सूचिभेद्येनेव, हस्तस्पृश्येनेव जिह्वाऽऽस्वाद्येनेव, घनेन तिमिरेण ।

आसन्नं जलप्रलयमनुमाय स्तम्भितगतिरिव सदागतिः निश्चलस्तस्थौ ।

समीपोपस्थितदुर्ज्ञेयमहाविपत्तिशंकाजड इव शोणो महानदः निस्तरङ्गः, निरुद्धय इव निःश्वासं, संस्तभ्य इवाऽऽत्मानं, दैवं प्रकोपं प्रतीक्षितुमारभत । अनामिकभयाऽऽतुरास्तन्नाविका अपि कथमप्याबध्य नौकास्तत्तीरे ससंभ्रमं स्वस्वकुटीराम्पलायन्त । निर्मनुष्यं चाभवत् कतिपयक्षणैरेव तत्तीरम् । पाटलिग्रामवासिनश्च कथमपि परिसमाप्य स्वं स्वं दैनिकं व्यावसायिकं कर्म, अशान्तस्वान्ता मूकाः स्वस्वनिलयेषु निलीनाः, निरुच्छ्वासा इव, आधिभौतिकविपत्प्रहारमुत्प्रेक्षितुमारभन्त ।

पाटलिग्रामप्रासादरक्षकाश्च प्राचीरशिखरात्···अपराशाङ्गणान्निःसाय सायंप्रकाशं क्षीणं महता वेगेन नभस्तलं निखिलमपि आक्रमितुं प्रवृत्तं घनं घनसंनयं, बलादाच्छादयदिव चलाचलसृष्टिमंगलेन केनचित् कृष्णेन वस्त्रेण सर्वत्र वेगेन प्रसरदन्धं तमः पटलं, जयजडामिव चित्रलिखितामिव स्तब्धां मूकपतत्रिकुलां सुदूरवनवृक्षराजिं, निष्प्राणमिव चित्रितमिव निस्तरङ्गं महानदं, वेगेन निर्जनीभवत् तत्तीरं, निर्जन्तुकीभवतीश्च पाटलिग्रामरथ्या अवलोक्य समुद्विग्नाः,

CC-0 Pulwama Collection. Digitzed by eGangotri

परित्यज्य नियतानि निरीक्षणस्थानानि, प्रासाद एव तत्र तत्राऽऽत्मसंरक्षणेच्छया समवेताश्चर्चामुखराः, घोरं वर्षाप्रहारम् ।

प्रकाशयन्ती क्षणमात्रं समस्तं जगतीतलं तीव्रेण पीतालोकेन, अपरस्मिन्नेव च दृष्टिपथात्तदत्यन्तं तद्विलोपयन्ती, पीता विद्युल्लता...एका...निरुच्छ्वासे मेघपटले सहसा ननर्त ।

तामनु च, विदारयदिव श्रुतिरन्ध्राणि, तन्मेघपटलं गम्भीरमतस्वनत ।

तदनु च, 'विदारितोदरमिव तया पीनया विद्युत्कर्तरिकया' तीव्रया, कज्जलकृष्णं तन्नभः जलौघान् वमितुमारभत ।

अचिरादेव च, किंचिल्लक्ष्यासु भावातिरेकादिव निश्चलासु वनराजिषु मन्द्रं क्लिन्नप्रासादपाषाणभित्तिषु रूक्षम्, आस्तृतस्य रजतपट्टस्येव महानदस्येषद्दृश्यस्य जलप्रवाहे चण्डं, मुसलाधारं, निपतन्तीभिरर्जुनशरप्रतिकर्कशाभिश्चण्डाभिः वारिधाराभिः विलोपितदिङ्मुखमिव नभस्तलं, धारामयमिवान्तरिक्षं जलमयमिव च भूतलं समजनि ।

अनुकूलतमं चावसरमेतं दैवोपनतं ततो निष्क्रमणार्थमवलोक्य, अपराह्णसेवाया मिषेणाऽऽदित एव काराकक्षे समुपस्थितौ तौ चारदम्पती कोशलदेवीं वृद्धायाः सेविकायाः छद्म दधितुं सुप्तोत्थितं मगधराजं च तत्पत्युः कृतकं वेषं दाधयितुमार्तथताम् । कृतवेषपरिवर्तनौ च तौ, निर्गत्यापिहितेन काराकक्षद्वारेण, प्राङ्मुखं निर्गममार्गमनुसृत्य; सेवाकार्यान्निवर्तमानाविवातिपरिचिताविव प्रासादप्राचीरमहाद्वारमुद्दिश्य गन्तुम्, अनुकूलदैवकृपया ततो निर्गत्य, दक्षिणयायिना कुपथेनैकेन कानिचित् पदानि गत्वा, तन्मध्यपातिनि निर्जने कुटज एकस्मिन् तयोरनुगमनं प्रतिपालयितुं चान्वरुन्धताम् ।

कोशलदेवी त्वादित एव सावधाना, यथानुरोधं कृतकवेषं परिधाय, स्वपतिं बालकमिवानभिज्ञमासन्नस्य मुक्तिप्रयासस्य, दैनिकचर्याविपरीतं किमपि घटदनुभूयैव कौतुकाविष्टं, जिज्ञासामुखरं,—वृद्धस्य सेवकस्य जीर्णेन वेषेण निह्नुतयथार्थस्वरूपं च विधाय दक्षिणभ्रूलताप्तस्फुरणसमुद्विग्नाऽपि अविचलितधैर्या, कुलदेवतां स्मृत्वा, पतिं हस्तेन कम्पमानेन गृहीत्वा, काराकक्षान्निःसृताऽपरिचितमपि तन्मार्गं यथानिर्देशं सधैर्यमनुसरन्ती, एकेनाऽपि प्रासादपरिचारकेण सैनिकेन वाऽदृष्टा, प्राङ्मुखेन निर्गममार्गेण प्रासादान्तर्वर्तिमहाप्राङ्गणे वर्षोदकप्लाविते कृतप्रवेशा, सवेगं निपतन्तीः तीक्ष्णाः शलाका इवांगानि-पीडयन्तीरविच्छिन्ना वारिधाराः सहमाना, क्लिन्नजीर्णवेषा, विस्मयमूकं शिशुमिवान्धविश्वासेन तामनुगच्छन्तं कौतूहलादितस्ततो दृष्टिव्यापारयन्तं बहोः कालादनन्तरं वर्षासुखमनुभूय मेघगर्जनं च समाकर्ण्य हृष्यन्तं स्मयमानं क्लिन्नधवलकेशाऽऽवृतप्रायाऽऽननं

CC-0 Pulwama Collection. Digitzed by eGangotri

वृद्धं भर्तारं मार्गं समुपदिशन्ती…चिरान्नु प्रासादप्राचीरमहाद्वारमुपससार।

अवलोक्य च तद्रक्षकसैनिकशून्यं किञ्चिच्चकिता, समाश्वस्ता, वर्षोदकनप्लावितनयनतया महाद्वारसमीप एव रक्षककक्ष एकत्रीभूतानां तादृग्वर्षासु बहिर्गच्छन्तौ तावेव सकौतूहलं निःशब्दमवलोकयतां धूमपाननिरतानां रक्षकाणामनभिज्ञा, महाद्वाराद्यावन्निष्क्रमितुं प्रयतते प्रकम्पमाना,…तावद्वृद्धस्तस्याः पतिः दक्षिणं पादमनवधानेन वर्षाजलप्रवाहनिह्नुतस्यैकस्य वर्तुलाकारस्य पाषाणखण्डस्योपरि न्यदधात्। विचलिते च तस्मिनकस्मात्…दुर्दैवी…जलाप्लाविते शिलाखचिते महाद्वारमार्ग एवापतत्।

पादास्थिभङ्गपीडित इव…बहु प्रयतमानोऽपि…आनमितया चिन्ताग्रस्तया भयातुरया भार्यया हस्तेनोत्कृष्यमाणोऽपि…मन्द्रयाऽऽतुरया वाण्या प्रेर्यमाणोऽपि नाशकदुद्धर्तुं स्वं शरीरं मार्गपतितम्।

अशृणोच्च महाद्वारसमीप एव रक्षककक्ष एकत्रीभूतानां धूमपाननिरतानां निःशब्दं तावेवावलोकयतां रक्षकाणां मध्यादेकमुच्चैर्विहस्य तमेव संबोधयन्तम्—'अरे भैरवनाथ! किमर्थमायासित आत्मा त्वयाऽस्मिन् भीषणे वर्षाप्रकोपे?… अप्युत्प्रेक्षसे महानदः समुल्लंघ्य तीरमर्यादां कुग्रामं तवाऽऽप्लावयिष्यति?… नेष्यति च लुब्धः कुटीरस्थां तव बहुमूल्यां संपदं-रत्नाकरोऽनेनोपहारेण तृप्यत्विति?… त्वं त्वस्यापेक्षया धीरा, दुर्गे!…त्वया त्वयं, प्रकृत्यैवाऽऽतुरः, निराकरणीय आसीदस्माद् दुःसाहसात्।…किंवा युवां…मेघाडम्बरमिममवलोक्य सहसा प्रत्यागततारुण्यौ…धारासंपातस्नानसुखमनुभवितुं प्रवृत्तौ?…एवमेतत्।…एवमेतत्।… अनुभवतम्…अनुभवतं यथेच्छं यौवनपुनरुल्लासम्।…हीः…हीः…हीः' इति।

यावच्च पिच्छिलाया भूमेरुत्थितुं प्राणपणेन प्रयतमानो वृद्धो बिम्बसारः समाकर्ण्यमं कुत्सितमुपहासं चकितः क्रुद्धः स्थलकालव्यक्तिविवेकशून्यः कञ्चित् प्रतिवादं तीव्रं कर्तुं प्रक्रमते… यावच्च भयाक्रान्ताऽऽशङ्कातुरा वराकी कोशलदेवी प्रकम्पमानेनाऽऽवेगनिष्ठुरेण हस्तेन पतिमुत्क्रष्टुं रक्षकाणां तां भ्रान्तिमक्षतां सरक्ष्यैव ततः कथमपि अपक्रमितुं च प्रक्रमते…तावन्नियत्या क्रूरया समादिष्टेवैका विद्युत् तद्दुर्दैव कटुस्मितरेखेव-मेघाडम्बरे क्षणमात्रमचकात्।

अदर्शयच्च तयोर्दुरवस्थामतिविस्पष्टम्।

तत्प्राक्तनप्रेरित इव, वृद्धस्य सेवकस्य भैरवनाथस्य भ्रातुष्पुत्रः, प्रासादपाचकान्यतमः, पाकशालां जिगमिषुः, वर्षाकौतुकवशान्महाद्वाररक्षकगणसमीप एव चिरायितः, समवलोक्य तयोर्दयनीयामवस्थां-पश्यत्स्वेवालसालसेषु रक्षकेषु सहासं-सत्वरं तत्समीप उपससार, आरभत च साहाय्यं प्रदातुम्।

CC-0 Pulwama Collection. Digitzed by eGangotri

निमेषमात्र एव च, अवतमसे तस्मिन् परिज्ञाय तयोर्वास्तविकं स्वरूपमाश्चर्येण महता उज्जगार।

श्रुत्वैव तस्योद्गारं तडित्स्पृष्टा इव मर्मदष्टा इव ते रक्षकास्तौ भयजडौ दम्पती तत्क्षणमेव वव्रिरे।

साक्षात्कृत्य च स्वत्रुटिं विस्मिता यावत् 'दुर्गाधिपतये निवेदनीयं न वा काण्डमेतद्'-इति विचारयन्ति तावत्ते पिधाय काराकक्षद्वारं यथापूर्वं बन्दिदम्पती निभृतमनुसरद्भ्यां यावच्छक्यं दृष्टिपथमारक्षकाणां परिहरद्भ्यां साक्षात्कृत्य राजबन्दिदम्पत्योर्दयनीयामवस्थां क्षणमात्रं स्तब्धाभ्यां क्षणमात्रानन्तरमेव 'बलप्रयोग एवाधुनाऽवशिष्ट' इति विचार्य विकृष्य छुरिके वस्त्रान्तर्निगूढे चारदम्पतीभ्यां तडिद्वेगेनाऽऽक्रान्ता विस्मयमूढाः कथमपि स्वरक्षणं कर्तुं समर्था अभवन्।

कवचाऽऽवृतवपुर्भिः सायुधैः प्रकुपितैः सैनिकैः सह शस्त्रहस्तयोरपि बलप्रयोगानभ्यस्तयोस्तयोश्चारदम्पत्योः केव तुलना ? ···कतिपयक्षणानन्तरमेव तौ स्वामिभक्तौ खड्गप्रहारच्छिन्नमस्तकौ तीक्ष्णभल्लविदारितोरस्थलौ निष्प्राणौ जलप्लावितायां महाद्वारभूमौ निपतितौ प्रवर्षता वरुणदेवेन सादरमन्तिमं स्नानमिवाऽऽपाद्यमानौ पितृघातकस्याजातशत्रोः करतलाभ्यामिव निःसरता रुधिरप्रवाहेणाऽऽरक्तं महाद्वारभूमितलमकुरुतामचिरादेव।

ततोऽपि भीषणतरां घटनां काञ्चिदप्रत्याशितामाशङ्कमानैः कुपितैः किंकर्तव्यविमूढैः रक्षकैः प्रधाव्याऽऽहूतः दुर्गपालकस्तु ससंभ्रमं तत्राऽऽगत्य स्वकर्तव्य पालनात् भ्रष्टान् अधोमुखान् रक्षकान् तीक्ष्णैर्मर्मभेदिभिरपशब्दैः प्रदूष्यापहरणकाण्डसंचालकयोस्तयोर्गूढदम्पत्योः प्राणान्तेनात्युद्विग्नः 'एतयोर्वार्धकविक्लवयोरपराधिनोरपि राजकीययोर्बन्दिनोर्विषये किं नाम कर्तव्यम्' इति विनिश्चेतुमपारयन् क्रोधनो मगधराज आकर्ण्येमां घटनां किं नु वक्ष्यति'-इति वितर्केण समुद्विग्नस्तत्क्षणे किमपि कर्तुमसमर्थस्तौ रुधिररञ्जितसेवकदम्पतीदेहनिखातनयनौ विभिन्नयोः काराकक्षयोः विनिक्षेप्तुं कर्कशेन स्वरेण समादिदेश।

अचिरादेव च तौ—चक्रवाकदम्पतीव पापेनान्धकारेण-तेनाऽऽदेशेन परस्परवियोजितौ विभिन्नयोः काराकक्षयोर्बलान्निक्षिप्तौ भाग्यमिव स्वं घोरं तमः सर्वव्यापि निर्निमेषमवलोकयन्तौ क्षणान् दुःखदुर्वहान् पीडाबहुलान् युगदीर्घान् कथमप्यतिवाहयितुमारेभाते।

सर्वं च तद्भीषणं काण्डमवलोक्य विदीर्णहृदयाया इव गम्भीरस्तनितमिषेण पापाचारिणः शपन्त्या इव प्रखरविद्युदुन्मेषैस्तान् तर्जयन्त्या इव दिवोऽश्रुधारा इव संतता वर्षोदधारास्तादृशपापिसम्पर्कप्रदूषितां धरणीं द्विगुणितेनाऽऽवेशेन तीव्रतरेणाऽऽवेगेन ताडयितुमारेभिरे।

जग्रसे च समस्तं विश्वं घोरं तमः श्वासमिवावरुन्धत्···कण्ठ इव निपीडयद् दृशमिव लुण्ठयत्···कज्जलसंनिभम्···अकुतोभयमिव पापकदम्बकम्।

CC-0 Pulwama Collection. Digitzed by eGangotri

## षोडशः परिच्छेदः

केनचित्…'खरण् खण्' इति पात्रध्वनिनाऽस्पष्टेन सुदूरादिवाऽऽगच्छताऽशान्तायाः निद्रायाः सागरात् सहसोत्कृष्टा वराकी कोशलदेवी जडदेहा शुष्यन्मुखा यथाऽऽभ्यासं समीपपर्यंकशायिनो वृद्धस्य भर्तुः निद्रितस्य शरीरात् परिभ्रष्टमास्तरणं सारयितुं-मीलितलोचनैव-दक्षिणां कृशां भुजलतां तद्दिशि व्यापारयामास। रिक्तशीतलभूतलस्पर्शिनीं च तामनुभूय चकिता-समुन्मीलितलोचना-तस्यां दिशि दृष्टिमक्षिपत्। दृष्ट्वा चाऽऽत्मानमपरिचितस्य कक्षस्य भूमौ निपतितं भर्त्रा विरहितं भीता यावदितस्ततः साशङ्कमवलोकयति तावदपतत् तस्या दृष्टिरात्मनः शुष्कप्रायस्य जीर्णस्य वेषस्योपरि। दृष्ट्वा च तं रक्तलाञ्छितं सहसाऽस्मरत् विगतसायंसंध्यायास्तद्भीषणं काण्डम्।

अमज्जच्च निष्प्राणेव गभीरचिन्तासागरे-'तर्त्हि नासीत् दुःस्वप्नम्। किन्तु सत्यमेव!…अहो! किमिति न तश्चाण्डालैरहमेव-तस्य सर्वस्य काण्डस्य सूत्रधारिणी-स्वयं दुर्दैविनी निरपराधानन्यानपि स्वसंपर्कमात्रेण दुर्दैवगर्तं पातयन्ती न विदारिताऽस्मिन् पाषाणकठोरे वक्षसि तीवैर्भल्लैः। तथा सति ह्यहमस्मान्नरकान्मुक्ना सधवैव लोकान्तरं प्राप्ता तत्र भर्तुरागमनं सौत्सुक्यं प्रत्यपालयिष्यम्। अचिरादेव हि सः मम वियोगं क्षणिकमपि सोढुमसमर्थः मां तत्रान्वगमिष्यत्। सुखं चाऽऽवां तत्रावत्स्याव।…अथवा, कृपणा खल्वहं स्वार्थान्धा। मयि हि परलोकमितो गतायां कीदृशी नु खलु तस्यावस्थाऽभविष्यत्? षष्टिवर्षाणीमानि सुखे दुःखे संपत्तौ विपत्तौ सुदिने दुर्दिने गृहे बहिर्वाऽहनि निशि प्रतिक्षणं मम संनिधौ वर्तमानस्य ममैव सामीप्यं बहु मन्यमानस्य ममैव परिचर्यां स्वीकुर्वाणस्य तस्य कीदृशी नु दुरवस्थाऽभविष्यत्? छायया वियोजितस्य प्रकाशस्येव तस्येह नूनमवस्थितिरसम्भाव्यैवाऽभविष्यत्। यातनाश्च शब्दातीताः सोऽन्वभविष्यत्। तासां कृते उत्तरदायिनो चाहमन्वागतस्य तस्य स्वर्गलोके स्वागतं कर्तुं कथमिवाग्रेऽसरिष्यम्। कथमिव चैतानि दीर्घदीर्घतमानि वर्षाणि-बालकमिव माता तं सस्नेहं परिचरन्ती…।'

'…परन्तु—…कुत्र सः?…कुत्र सः?…अहो।…तस्मात् काण्डादनन्तरं तैः पापैः स उद्भ्रान्तप्रायो बलादन्यस्मिन् कक्षे निक्षिप्तः।…अहं चैतस्मिन्!…न

CC-0 Pulwama Collection. Digitzed by eGangotri

खलु…सहिष्ये…एतत् !…सहिष्ये रौरवीया अपि यातनाः।…परन्तु सहिष्येता तथापि भर्तुः सहवास एव।…अहं…।'

चिन्तयन्ती चैवापश्यत् कक्षद्वारमुद्घाट्य निःशब्दं प्रविशन्तीमपरिचितां काञ्चित् कठोरमुखमुद्रामल्पवयस्कां दासीमुच्छिष्टानि भोजनपात्राणि ततोऽपनेतुम्। अपृच्छच्च तां, अस्पृष्टान्येव तानि दृष्ट्वा सविस्मयं तामवलोकयन्तीं निःशब्दां, तीक्ष्णेन स्वरेण—'कुत्र मगधराज' इति। एकवारं पुनः पृष्ट्वाऽपि सा यदा न किञ्चिदपि प्रत्युत्तरमदात्…तदा कुपिता भोजनपात्राणि तत्क्षणमेव नेतुमादिशत्। तस्यां च ततो विनिर्गतायां रिक्तहस्तायां…व्यावर्त्य मुखं भूमावेवाऽऽत्मानमक्षिपत्।

वृद्धस्तत्पतिस्तु—आदित एव मुक्तिप्रयासस्यात्यन्तमनभिज्ञः, क्षणमात्रं तदतीतसायंकालिकं काण्डं दुःस्वप्नमेव मन्यमानोऽन्यस्मिन्नेव क्षणे समुद्भ्रान्तस्वमस्तिष्ककल्पनोद्भूतमेव तन्मन्तुं प्रवृत्तोऽपरस्मिन्नेव क्षणे पीडातुरं दक्षिणं पादमनुभूय रक्तरञ्जितं च स्वं जीर्णं वेषमवलोक्य हठात् प्रबोधितो विचारमूढो दिग्भ्रामकतर्ककुतर्कवात्याचक्रेऽपि 'मम महाराज्ञी तैर्मम सकाशाद् दूरीकृता'-इत्येतदेकमात्रमेव दुःखमुरसि दधानः—निशां तामनन्तां कालनिशामिव…अनिमिषं तमसि किञ्चिदवलोकयन्नेव नाम…अत्यवाहयत्, प्रातः कालं च।

नियते समये भोजनपात्राणि गृहीत्वा कक्षद्वारमुद्घाट्य निःशब्दं प्रविशन्तीमपरिचितां काञ्चित् कठोरमुद्रामल्पवयस्कां दासीमवलोक्याऽपि उदासीनो मूर्तिवत् तथैवाऽऽसीनः…अस्पृशन् भोजनपात्राणि…उच्छिष्टानि तानि ततोऽपनेतुं प्रत्यागतामस्पृष्टानि तानि दृष्ट्वा विस्मयेन तं क्षणमात्रमवलोकयन्तीं विमूढामन्यस्मिन्नेव क्षणे रिक्तहस्तं ततः प्रतिनिवर्तमानां तां भावशून्याभ्यां शुष्काभ्यामारक्ताभ्यां नयनाभ्यामवलोकयन्…तस्थौ तूष्णीम्।

यदा तु सा दासी, सद्यः नियुक्ता, दुर्गपालाय तां वार्त्तामकथयत् तदा स विगतसायंकालिकं काण्डं वारं वारं पर्यालोच्य, खिद्यमानो 'विदित्वा सर्वां घटनां मगधराजः शीघ्रकोपी किं नु करिष्यति' इति चिन्तया पीड्यमानः प्रत्यपहरणप्रयासवास्तविकसूत्रधारिणो विषये बहुवारं चिन्तयित्वाऽपि किमपि सम्प्रधारयितुमसमर्थः जागरणाऽऽरक्तनयनोऽधिगत्य राजकीयबन्दिनोः प्रायोपवेशनवार्त्तां विस्मितः कुण्ठितमतिस्तत्क्षणमेव सन्देशवाहकमेकं चतुरं विससर्ज मगधराजसेवायां सर्वं वृत्तान्तं निवेदयितुम्। ययाच च निर्देशम्।

वञ्चयितुमिव कञ्चित् मर्मभेदिनमनुतापमृगयुम्, आत्मानं दैनंदिनप्रशासनकर्मजालैऽधिकाधिकं गूहमानः, स्वामिसमादिष्टो यन्त्रपुरुष इव मगधराज्यस्यो-

CC-0 Pulwama Collection. Digitzed by eGangotri

न्नतिमेकमात्रामभिलक्ष्य, प्रतिपलं सावेशं प्रयतमानः, सर्वव्यापिनाऽमङ्गलेन श्वासमिव निरोत्स्यता गल इव निष्पीडयता हृदय इव भिन्दता औदासीन्येन ग्रस्तं मातृसहवासं यावच्छक्यं परिहरन्… अजातशत्रुस्तु संदेशवाहकात् तस्मात् तां वार्त्तां रहस्यश्रृणोत् तदा सहसा समुद्विग्नः निर्देशं कमपि दातुमपारयन्, स्वयमवलोक्य परिस्थितिं किमपि विनिश्चेयमिति विचार्य…,असूचयित्वैव कमप्याकस्मिकप्रादेशिकप्रशासनपरीक्षणव्याजेन प्रभञ्जनमारुह्य प्रासादान्निर्गतः, प्राचीगामिना निर्जनेन कुपथेन केनचिद् वर्षाप्रकोपपिच्छिलेन प्रवसन्, अचिरादेव, तत्सदृशस्य पापिनः सम्पर्केण कलङ्कितमात्मानं धावितुमिव वर्षाजलधौतान्नीलाद्गगनादपरतोयनिधौ निमज्जति भगवति सवितरि, तद्दर्शनमात्रपरिजिहीर्षयेव नभोङ्गणेऽनवतरन्तीषु क्रीडितुमुत्सुकोत्सुकास्वपि तारकासु, 'अयं पितृपीडकोऽधुना किं नामानुतिष्ठेत्' इत्याशंकया निरुद्धश्वास इवावाति निशामुखसमीरे,…प्राप…चिरात् खल्वदृष्टं पित्रोः बन्दीकरणादनन्तरं जुगुप्सयेव परित्यक्तं विगतसान्ध्यकालिकवर्षाजलधाराधौत-प्रसृतसांध्यरागाऽऽरक्ततर-प्राचीरं स्वं पाटलिग्रामप्रासादम् ।

तदागमनमुत्प्रेक्षमाणैर्दक्षैर्भीतैरपि स्तब्धैरपि विदित्वा तस्य कुत्सितं रहस्यं तत्कालपर्यन्तं सुगोपितं घृणातीक्ष्णयेव कयाचिदनिर्वर्णनीयया दृष्ट्या तं ध्यायद्भिः महाद्वाररक्षकैः निष्कौतुकं बहुमानितः, प्राप्य तदागमनसूचनां ससंभ्रमं स्वनिवासात् प्रधावितेनाऽऽदरनम्रेण शङ्काकुलेन दुर्गपालेन भीतभीतमभिवन्दितो महाद्वारभूमितल एव निपतिते रक्तरञ्जिते कर्दमेशुष्कप्राये क्षणमात्रं प्रबद्ध्याघोदृष्टिमपरस्मिन्नेव तामन्यत्र व्यापारयन् सर्वेषामेव निर्निमेषदृष्टिविषयीभूतमात्मानमनुभवन्, यथार्थरूपेण परिज्ञात आपातसज्जन आततायीव कथमपि ततोऽन्तर्धातुमुत्सुकः…सत्वरं प्रासादं प्राविशत् ।

अविश्रम्यैव चिरपरिचितेषु सुसज्जितेषु विश्रामकक्षेषु, दुर्गपालेन विदिततदभिप्रायेणोपदिश्यमानमार्गः काराकक्षाणामभिमुखीबभूव । प्राप्य च पिहितद्वारं प्रथमं कक्षं निःस्तब्धम्, अन्तःप्रवेष्टुमपारयन्, ईषदुद्घाट्य द्वारं, बहिःस्थित एव, कक्षान्तर्भागे दृष्टिमक्षिपत् । अपश्यच्च-निरास्तरणे भूमितल एव भित्यभिमुखं शयितां जीर्णशीर्णवेषां क्षीणतरदेहलतां धरातललुण्ठद्धवलविरलविलुलितालकां मन्ददीपाऽऽलोकितां-मूर्तिमतीं जरावेदनामिव-मातरं कोशलदेवीम् । तत्समीप एव चानुच्छिष्टानि मक्षिकाऽऽवृतानि पिपीलिकाबहुलानि आश्यानभोजनपात्राणि । क्षणमात्रानन्तरमेव च ततोऽपसार्य दृष्टिं निःशब्दः पितुः कक्षमुद्दिश्य चचाल ।

तस्यापि पिहितं द्वारं प्राप्य, तस्याप्यन्तः प्रवेष्टुमपारयन्, तथैव निःशब्दं समुद्घाट्य द्वारं, बहिःस्थित एव, दुर्लक्ष्यव्यक्तिरेव, तथैव कक्षान्तर्भागे नेत्रे

CC-0 Pulwama Collection. Digitzed by eGangotri

व्यापारयामास। ददर्श च परित्यज्य पर्यङ्कं स्वं निरास्तरण भूमितल एव समुपविष्टं, शून्यया निष्प्राणयेवानिमिषया दृष्ट्या भार्यायाः रिक्त पर्यङ्कं ध्यायन्तं, क्षामतरतनुं, जीर्णशीर्णवेषं, प्रवृद्धधवलश्मश्रुं मन्ददीपालोकितं—मूर्तिमत् वार्धक्यमिव सर्वतः पराभूतं,—पितरं बिम्बसारम्। तत्समीप एव च—अनुच्छिष्टानि मूषकगणखाद्यमानपदार्थान्याश्यानभोज्यपात्राणि।

असहमान इव च तद्दृश्यमतिकरुणं ततोऽप्यपसृतः, निःशब्दं ततो निर्गतः, अनुसरन् तं दुर्गाध्यक्षं मन्द्रया घर्घरया वाण्या तौ कक्षेऽविभिन्न एव पूर्ववत् स्थापयितुं सर्वविधसुखसुविधोपपन्नौ च कर्तुमादिशत्।

विसृज्य च तं यथाऽऽदेशं कर्तुं स्वविश्रामकक्षान् जगाम स्वविश्रामार्थं किल। संयुतौ तौ, तत्र रात्रिं यापयितुमक्षमः, राजगृहाय प्रस्थितो, दुर्गपालस्य सास्रमनुरोधमवधोरयितुमसमर्थः, सकृत् पुनरपि काराकक्षविभागस्याभिमुखीभूतो, बन्दिदम्पतिभ्यामधिष्ठितस्य निःशब्दस्य कक्षस्य द्वारमीषदुद्घाट्यान्तः दृष्टिं क्षिपन्,... अक्षिलक्ष्योचकार उज्ज्वलतरप्रदोपप्रभाप्रकाशिते धवलतरप्रच्छदाऽऽच्छादिते पर्यङ्क एकस्मिन् समुपविष्टाया हर्षाश्रुपूरितनयनायाः प्रकम्पमानाधरोष्ठायाः कृशेनापि नवनीतकोमलेन करतलेन भर्तुः धवलविरलकेशान् परामृशन्त्या अर्द्धांगिन्या आननं—सुदीर्घाद् वियोगादनन्तरमिव महता प्रयासेन पुनश्चक्षुर्विषयीभूतं—विस्मयविस्फारिताभ्यां श्रान्ताभ्यामप्यनिमिषाभ्यां नयनाभ्यां ध्यायन्तं, भावावेगप्रस्फुरत्क्षीणवक्षःस्थलं कृशकायं जनकम्।

अपारयन्नपि तद्दृश्यं क्षणमात्रमप्यधिकमवलोकयितुं मोहित इव केनचिन्मन्त्रेण ततोऽपसर्तुमक्षमः, महता कष्टेन ततो निर्गतः, मोहित इव, मुषित इव प्रातिष्ठद्रायिनामधृत्वैव दण्डं ततः प्रतिनिवर्तमानं स्वामिनं वीक्ष्य चकितानां प्रत्यागतप्राणानामिव समाश्वस्तानां सर्वेषां कृत्रिमाऽऽदरप्रह्वाणामभिवादनानाम्।

प्रायतत च राजगृहे यथापूर्वमात्मानं प्रशासनकर्मणि निमज्ज्य विस्मारयितुं तौ काराकक्षे जीवितावसानं मुक्तिप्रदं प्रतीक्षमाणौ वृद्धौ पितरौ।

न त्वलभत साफल्यम्।

अपि च—,पातकं-पाताले निक्षिप्तमपि-महासागरे निमज्जितमपि-गूढगभीरगिरिगह्वरे गोपितमपि— कथञ्चित् कदाचित् केनचिन्माध्यमेन सर्वविदितं भवत्येव।

पातकस्य स्वभाव एवायम्।

अजातशत्रुणाऽपि तत्कालपर्यन्तं सुरक्षितं, स्वयं तस्य जन्मदात्र्याऽप्यपरि-

CC-0 Pulwama Collection. Digitzed by eGangotri

लक्षितं तत् कुकर्म तस्मात् सायंकालिकात् पलायनप्रयासकाण्डादनन्तरं महता वेगेन—समुत्खातं शवमिवोग्रगन्धि—सर्वजनवेद्यं बभूव।

मगधयुवराजेनैव, तथा कपटजालं विस्तारयता, निराशङ्कौ प्रमुदितेन मनसा होलिकादहनमहोत्सव सम्मानयितुं कोशलनरेशस्य राजधानीं गच्छन्तौ भागीरथीरोधसि निद्रितावेव बन्दीकृतौ। गूढं च, विहारार्थं किल शोणमहानदस्य तीरे निर्मितस्य दुर्गप्रायस्य प्रासादस्यान्धकारपूर्णे कारागृहे निक्षिप्तौ निर्दयं पीडितौ ततश्च गृहीत्वा दीनं वेषं कथमपि मुक्तये प्रयतमानौ-पलायनप्रवृत्तावेव-बलान्निगृहीतौ तस्मिन्नेव कारागृहे पुनः निक्षिप्तौ कठोरतमेन नियन्त्रणेन निष्पीड्यमानौ···आस्ताम्-' इति हि वार्त्ता वात्येव सर्वदुःखदायिनी पाटलिग्रामदुर्गनिवासिषु तेभ्यः पाटलिग्रामवासिषु तेभ्यः समस्तेष्वपि मागधषु प्रजाजनेषु तेभ्यः कोशलमद्रवत्सराज्यनागरिकेषु तेभ्यश्च निखिलेष्वपि भारतीयजनेषु दावानलवेगेन प्रससार।

दाशरथिं राममिव स्वात्मजमनादिकालात् कांक्षन्ती भारतीया जनताऽनया सर्वथाऽप्रत्याशितया वज्रपातनिभया भूमिविदारणसन्निभया वार्त्तया विस्मिता दुःखिता समुद्विग्ना चाभवत्। अवधीर्य तस्य गुणगणगौरवं समुपेक्ष्य सर्वथा स्वस्याननुभूतपूर्वां सुस्थितिं तत्सुप्रशासनमात्रसमुद्भूतां मागधप्रजा च तं तिरस्कर्तुमारभत। तत्कालपर्यन्तं तस्य स्वयं कर्मठस्य स्वयं दक्षस्य स्वयं निपुणस्याऽऽज्ञाः कठिनतमा अपि शिरसि कृत्वा तासां प्राणपणेन पालनेऽहमहमिकया प्रवर्तमानाः मागधा अधिकारिणोऽप्युच्चावचाः नागरिकाः सैनिकाश्च ततः परं महारोगिण इव क्षत्रियरोगग्रस्तस्यैव दुर्गन्धिन इव तस्य समीप आगन्तुमनिच्छवस्तदाज्ञावशात् तत्पुरतः समुपस्थिता अपि ततो यावच्छक्यं शीघ्रमेवापसर्तुं कथमपि च तदाज्ञां कार्यान्वितां कर्तुमारभन्त। हार्दिकेनाऽपि तस्य प्रशंसने न न हृष्टा अभवन्। कृतान्तादिव मानवरूपधारिणो विश्वासघातादिव विग्रहिणः पितृद्रोहादिव शरीरिणस्तस्माद् भीतभीताः स्वस्वकार्याण्यन्वतिष्ठन्···कथमपि तस्मान्मुक्तिं कामयमाना।

अत्यल्पमिदमुक्तम्। न केवलं तस्याधिकारिणोऽपि तु प्रजाजना अपि··· एकस्या एव भावनाया···भीतेः...वशीभूय तस्याऽऽज्ञामपालयन्।

सुनिपुणं प्रशासत एव तस्य समस्तमपि मगधराज्यं विलुप्तहासं विगतोल्लासं निरुत्साहं कारागृहमिवाभवत् अतिविशालं···तस्यैकमात्रस्य कारापालकस्य।

यदा तु वृद्धस्य बिम्बसारस्यान्तःपुरे वार्त्ता सा···विषगन्धलहरीव··· अपरिलक्षितैव केनापि···महता वेगेन प्रससार तदाऽऽदित एव औदासीन्यजडा तत्रत्या परिस्थितिः सत्यमेवावरुध्यमानश्वासेवाभवत्।

तत्रत्याः परिचारिका, अल्पवयस्का वृद्धाश्च, सर्वविधैश्वर्यसम्पन्नेऽपि सकल-

CC-0 Pulwama Collection. Digitzed by eGangotri

सुखसुविधोपपन्नेऽपि केनापि दुष्टेन प्रेतेन समाक्रान्त इव भयजडे तस्मिन् मगध-राजप्रासादे यन्त्रचालिताः पुत्तलिका इव निःस्नेहं स्वस्वकार्याण्यन्वतिष्ठन् ।

न तु न्यवेदयन् तां दुर्वार्त्तां राज्ञ्यै वैशाल्यै···आदित एव दुःखभारभुग्ना विज्ञायाऽऽत्मजस्य प्राणप्रियस्य कृत्यं तत् सर्वलोकविरुद्धं सत्यमेव भञ्ज्याद् इति भीत्या,···न राज्ञ्यै माद्र्यै विज्ञाय सपत्न्याः पुत्रस्य गुणगणमण्डिततया लोके प्रख्यातस्य पापं कर्म तत्, सा उद्विज्य सहसा, कदाचिद् युवराजजनन्यै कथयेद् इत्याशङ्कया,···न च हल्लवेहल्लाभ्यां श्रुत्वा स्वभ्रातुः पितृकल्पस्य दुराचारं तं किमपि तौ कुर्याताम् इति शङ्कया ।

अजातशत्रुस्तु, मर्मान्तिकया पीडया पीड्यमानः रुग्णः स्वपरिस्थितेरिव, अनामिकया हृदय इव निष्पीडयन्त्याऽस्वस्तिभावनया दल्यमानमानसः, स्वसेवकानां स्वप्रजाजनानां समस्तानां भारतीयानां च हृदयभावपरिवर्तनं नावेत् । यथाभ्यासं च दैनिकं प्रशासनभारमवहत्···दासो महत्त्वाकांक्षाया अन्धायाः ।

अप्रतिरोधा खलु कालस्य गतिः ।

शनैः शनैः···अहर्निशं सप्ताहे, सप्ताहः पक्षे, पक्षो मासे, मासो वर्षे च पर्यणमत । शनैः शनैः···समुत्तेजिता मागधाः सेवका अधिकारिणः प्रजाः,— अन्ये च—, कालप्रभावेण मन्दीभूतोद्वेगाः 'कलङ्कितस्यैव नृपस्य शासनमस्मद्दैव-लिखितम्' इति मन्वानाः' 'दैवलिखितं प्रमार्ष्टुं न कोऽपि समर्थः' इति निराशाः, स्वशासकस्य विषये सर्वांगीणमौदासीन्यं कवचमिवोररीकृत्य स्वस्वजीवनाऽऽवर्तेषु भ्रमितुमारेभिरे ।

एवं गच्छति काले,···अनवरतं भ्रमत् समयचक्रं पारिवारिकजनहृद्यं सर्वमङ्गलं रक्षाबन्धनमहोत्सवमायियत् । घनवर्षाघनमेदुराभ्योऽपि सर्वाभ्य आशाभ्यः कर्दमदुर्गमैरपि मार्गैः परित्यज्य गुरुतमान्यपि कार्याणि भ्रातरः— संपन्ना विपन्नाश्च समीपस्था दूरवासिनश्च सुशिक्षिता अशिक्षिताश्च-रक्षा-कङ्कणमाबन्धयितुमातुरेण मनसा समुत्सुकेन च हृदयेन स्वस्वभगिनीरुपायन् ।

प्राप्नोच्च···अजातशत्रुरनभिज्ञ एव तस्य महोत्सवस्य, विश्रामकक्षे वातायनसमीपे स्थित्वा कज्जलकृष्णा दिगन्तव्यापिनीर्विद्युल्लतोद्भास्यमाना बलाकापंक्तिहारहृद्याः पयोदराजीरवलोकयन् उदासीनेन मनसाऽऽत्मानमपि परित्यज्य संत्रस्तं मानवशरीरं स्वीकृत्य पतत्रिदेहं समुन्नत उत्तुंगपयोदराशिभ्यो-ऽभ्युन्नततरे निरभ्रे नीले गगनेऽपुनरागमनायोत्पतन्तं परिकल्पयन्, ससंकोचं सेवायां समुपस्थितताया वेत्रधारिण्या माध्यमेन जनन्याः संदेशं—'पत्युः सकाशात् सद्य एवाऽऽगता, तव भगिनी, राज्ञी पद्मावती, रक्षाकङ्कणबन्धनार्थं तवाऽऽगमनं प्रति पालयति'-इति ।

CC-0 Pulwama Collection. Digitzed by eGangotri

विस्मितश्च,···अनिच्छन्नपि मातुः'-विग्रहिण्या विरहव्यथाया इव',-

परिम्लानायाः पाण्डुरमुखायाः समक्षमुपस्थातुं चिरात् खलु पतिगृहादागताया भगिन्या एकमात्रायाः रक्षाकङ्कणमाबन्धयितुं साग्रहमाह्वयमानाया आमन्त्रणमवधीरयितुमसमर्थो दृढीकृत्य इव स्वमानसं विचार्य इव किमपि तत्क्षण एव मातुः समीपं चचाल···वेत्रधारिण्या ससंभ्रममुपदिश्यमानमार्गः।

प्रविश्य च पूर्ववदेव महार्हाऽऽस्तरणसंछादितभूतलेष्वपि मन्दशीतलसमीरंदोलायमानकौशेययवनिकातिरोहितपुरुषप्रमाणवातायनेष्वपि मन्दाऽऽलोकतयाऽपराह्लस्य सद्यःप्रज्वालितसौवर्णदीपदण्डप्रकाशिताभ्यन्तरेष्वपि प्रत्यग्रबकुलमालामोदवासितेष्वपि घनतिमिरपटलेनेवौदासीन्येनानिर्वचनीयेन प्रत्याख्येयेन ग्रस्तेषु कक्षेषु···अवलोकयामास प्रधाने कक्षे भूमितल एवोपविष्टां, प्राचीनाद् वातायनाद् बहिर्दृश्यं विचित्राकारं सजलजलदखण्डं संदेशवाहकमिव कस्याश्चित्, कामार्ताया यक्ष्याः प्रवासोत्सुकं सविलासया विद्युल्लतया प्रतिरुरुत्सयेव वारं वारं समाश्लिष्यमाणं, परिचुम्ब्यमानं सहप्रवासिभिर्बलाकागणैः शब्दायमानैः प्रतिपन्नसुहृत्कार्यनिर्वाहार्थं प्रेर्यमाणमिव,निर्निमेषमवलोकयन्तीं,रजततन्तुभिरिव कालजरास्नेहचुम्बितैरिव धवलैः कैश्चित् केशैर्विदूषितां विलुलितालकां वेणीं दधतीं, रक्तक्षयसमाक्रान्तामिव स्फटिकगौरवर्णां, विस्पष्टेन सौभाग्यतिलकेनालङ्कृतभालप्रदेशां, शुभ्रकौशेयवस्त्राऽऽवृतकृशतरतनुलतां, सौभाग्यसूत्रमात्रशेषकम्बुग्रीवां जननीं,· तत्समीप एव च भूतल एवोपविष्टां मंदसमीरतरंगप्रकम्पमाने निस्तेजस्के प्रज्वलद्दीपज्योतिषि निबद्धैकाग्रदृष्टिं, चिरकालादनन्तरं पुनर्दृश्यमानां प्रौढयौवनामपि पूर्णविकसितरामणीयकामपि राजवैभवोच्चशिखरे विराजमानामपि विविधरत्नाभरणालङ्कृताङ्गलतिकामपि पतिसुखपरितृप्तहृदयामपि आकांक्षयेव कयाचित् पीडयेव कयाचिन्मर्मघ्नयाऽहोरात्रं परिशोष्यमाणां, विलुप्तस्मितनयनां, विग्रहिणीमिव दौहित्रीं वेदनां, भगिनीं पद्मावतीम्।

अवलोकनक्षण एव च तीव्रतरीभूतामपसिसृप्सां कथमपि विजित्य, कृत्रिमस्मितरेखाङ्कितोदग्रमुखमुद्रः, समुपसृत्य मातुश्च पादावभिवन्द्य, स्नेहसिक्तया वाण्या भगिन्यास्तत्पत्युश्चानामयमपृच्छत्। ते तु, विचारतन्द्राया हठात् प्रबोधित इव, तस्याऽऽगमनेनाऽऽकांक्षितेनापि भीत इव, तस्मिन् दृष्टिं स्वां निःशब्दां वेदनापूर्णामाबबन्धतुः क्षणमात्रम्।

तदनन्तरमेव जनन्या मूक दृष्ट्यैव प्रेरिता तस्य भगिनी, सहसोत्थाय, गृहीत्वा कुंकुमाक्षतपुष्पहारनारिकेलरक्षासूत्रनीराजनादीपिकादिसामग्रीमण्डितां समुज्ज्वलां रजतस्थालीं किञ्चिद्वेपमानेन हस्तेन, प्राच्यभिमुखं सौवर्ण्यां महार्हदुकूलाच्छन्नायामासन्द्यामुपविष्टस्यानिमिषया स्नेहाकुञ्चितया बाल्यसखीमनेकबालिश्यविस्रम्भसाक्षिणीमकृत्रिमस्नेहशीलां भगिनीमतीतकालचोरितां

CC-0 Pulwama Collection. Digitzed by eGangotri

पुनरप्येकवारमवलोकयन्त्या दृष्ट्या तामेव ध्यायतस्तस्य दुश्चिन्तारेखाङ्कित उच्छूननाडीकलङ्किते प्रोन्नते विस्तृते भालपट्टे तिलकं चकार,… अक्षतैः कुंकुमाऽऽरक्तैरानर्च,…पुष्पहारेणालञ्चकार,…घृतदीपिकया नीराजनां च कृत्वा तस्य मणिबन्धे लोहमय इवातिदृढे कौसुम्भं रक्षासूत्रमाबबन्ध ।

तेन सस्मितं सकौतुकं निक्षिप्त एव तु तस्यां रजतस्थाल्यामेकस्मिन दैदीप्यमानहीरकखचिते सौवर्णे ग्रैवेयके, तथैव विधृतनीराजनापत्रिका… एकाग्रया हृदयान्तरिव प्रविशन्त्या मर्माणीव स्पृशन्त्या मृतप्रायाः कोमला भावना इव पुनरुज्जीवयन्त्या करुणया दृष्ट्या तं प्रतिध्यायन्ती, घृतदीपिकाऽऽलोकोज्वलितमुखारविन्दा, ईषत्स्फुरत्कोमलनासापुटा जगादास्फुटाक्षरं—'नेच्छाम्येतदन्यद्वा किमपि भूषणम् । जानासि त्वं किमहमिच्छामि । तदेव देहि मे…इति ।

तस्थौ च तथैव क्षणमात्रम्…अपेक्षमाणेवकिञ्चिदाश्वासनं तस्मात् ।

अधः कृतदृष्टि कृष्णतरमुखमुद्रं विलुप्तस्मितं मूकं च तमवलोक्य, ततः पर तत् समक्षं क्षणमपि स्थातुमसमर्था, निधाय नीराजनापात्रिकां भूमितल एव, अपृष्ट्वैव तं मातरं वा, नैराश्यक्षोभं दमितुमक्षमा वात्येव कक्षात्तस्मान्निर्जगाम ।

प्राप प्रासादमहाद्वारं त्वरितगतिः, सेविकया कयाप्यनुपदिश्यमानमार्गा, अधोदृष्टिरारक्तमुखकमला, सर्वथाऽनभिज्ञा प्रासादकक्षकोणेषु सहसाऽपसृतानां ससम्भ्रमाणामन्तः पुरिकाणां सविस्मयानां दृष्टिपातानाम् ।

आदिदेश क्रोधतीव्रेण स्वरेण स्वरथं सद्योविमोचिताश्वं तस्मिन्नेव क्षणे समुपस्थापयितुम् ।

प्रातिष्ठत च वत्सदेशराजधान्यै ससम्भ्रमं सारथिनोपनीतं रथमारुह्य परं चकितैः सेवाभाववशादधोदृष्टिभिः प्रासादमहाद्वाररक्षकैरपाङ्गदर्शनैरवलोक्यमाना, प्रतिपलं सान्द्रतरीभवन्तं नीलनीरदसंदोहं, वर्षातिमासन्नप्रायं सूचयन्तं शीतलं प्रतीपं पवनं च…विस्मयस्तब्धायाः शृण्वत्या एव जनन्या…अस्पृष्टवाऽन्नलेशमपि भ्रातुर्गृहे ।

CC-0 Pulwama Collection. Digitzed by eGangotri

## सप्तदशः परिच्छेदः

अजातशत्रुस्तु, जडीभूत इव शनैः शनैः क्षीणतरीभवन्तं पत्युर्गृहाय कृतप्रस्थानाया भगिन्या रथध्वनिमधःकृतनयन एव शृण्वन्, विलुप्तचेतन इव क्षणमात्रं तथैवोपाविशत्। असहमानः प्रयतमानाया इव रहस्यं ज्ञातुमाकस्मिकस्य तस्याः प्रयाणस्य तमेव मर्मभेदिभ्यामिव हृदयतलस्पर्शिभ्यामिव विस्मयतीक्ष्णाभ्यां लोचनाभ्यामवलोकयन्त्या मातुरेकाग्रां दृष्टि···निःशब्दमुदतिष्ठत्। प्रत्यावर्तत च सावेगं,- अपृष्ट्वैव जनन्या अनुज्ञां,—स्वकक्षान्।

अप्रतिरोधं च समयचक्रं यथापूर्वं भ्रमितुमारभत।

शनैः शनै दुःखभारमन्दगतिरिवाहर्निशं सप्ताहे, सप्ताहः पक्षे पक्षो मासे मासश्च त्रैमासे पर्यणभत।

अजातशत्रुश्च···यथापूर्वं दैनिकराज्यप्रशासनभार आत्मानं निमज्जयितुमचेष्टत। साफल्यं तु नालभत। 'रक्षाबन्धनमहोत्सवार्थं पतिगृहात् स्वयमागताया, बद्ध्वा तत् पवित्रं बन्धनं स्वभ्रातुर्मणिबन्धेऽतिदृढे, विधूय नारीस्वभावसुलभमाभूषणकौतुकं तस्य सकाशात् सर्वथाऽनपेक्षितं तद्दानमस्फुटाक्षरं याचमानाया, विधृतनीराजनपात्रिकमेवैकाग्रया दृष्ट्या तं प्रतिध्यायन्त्याः, क्षणमात्रानन्तरमनुभूय स्वकरुणयाचनावैफल्यं नैराश्यग्रस्ताऽऽननचन्द्रायाः, निधाय पात्रिकां भूमितले सहसाऽपृष्ट्वा कस्याप्यनुज्ञां तस्मिन्नेव क्षणे पतिगृहाय प्रस्थिताया, बालसख्याः भगिन्यास्तत् स्मृतिचित्रं तस्य चित्तं निरुच्छ्वासं छादयितुमारभत।

भ्रमयितुं च तर्कवितर्कभ्रमिषु···'नूनं सा···स्वपितरावेव वृद्धौ···मम सकाशादयाचत। दृष्टिरेव तस्याः करुणकरुणा तस्या मनोगत तदजूघुषत।···परन्तु ···परन्तु···कथं तया विज्ञातं···यदहमेव तत्क्षण एव तस्या याचनां पूरयितुं समर्थ इति ?···अपि साऽज्ञातनामधेयैराततायिभिरपहृतौ तौ प्राणपणेन गवेषयितुं मां तस्या याचनाया मिषेण प्रैरिरत ? न खल्वेवम्। तस्याः सा एकाग्रा मर्माणीव स्पृशन्ती दृष्टिः—बाल्ये सुलभापराधेऽसकृदनुभूता मया-स्फुटमेव व्यानक् यत्···'तस्याः पितरौ मम सकाशादेवं प्राप्यौ। नान्यस्मात्। सा च तयोर्दीना याचिका' इति।···एवमेवैतत्। परन्तु···सा कथमेतद् गूढतमं रहस्यमवेत् ?···मया खल्वादित एव सावधानेन तथा चेष्टितं यथा वर्जयित्वा परमविश्वसनीयान् कतिपयान् सहकारिणः···न कोऽपि सत्यमुत्प्रेक्षेत।···तत् किं मम सहकारिणामन्यत-

CC-0 Pulwama Collection. Digitzed by eGangotri

मेन केनचिद्रहस्यमेतदुद्घाटितं भवेत् ? न खलु शक्यमेतत्। मदभिन्नवृत्तयः खलु ते।...न जानामि कथं खलु रहस्यमेतत् साऽजानात्।...अथवा-गुह्यस्य स्वभाव एवायम्। तद्धि प्राणपणेन सुरक्षितमपि कथञ्चित् कदाचित् किमपि माध्यममवलम्ब्य प्रकटीभवत्येव।...विशेषतस्त्वेतादृशं गुह्यम्।...तत् किं तस्या एव विदितमेतत् ? उतान्यजनानामपि ?...सर्वेषामपि ? नूनम्। कथं खल्वितो दूरे पतिगृहे निवसन्त्यास्तस्या एतद्विदितं स्याद्यद्येतत् सार्वजनीनं न सञ्जातं स्यात् ?...अहो ! सर्वेषामेव...मम जनन्या अपि...मम भ्रात्रोरपि...विदितमेतत् !'

तर्कयंश्चैवं स्वात्मनैव, विचलितहृदयः, सहसा प्रबोधित इव दुःखजडाया निद्रायाः, कृताञ्जनयेव तीक्ष्णतरया दृष्ट्या स्वं परितोऽवलोकयन्, विदाञ्चकार नागरिकाणां सैनिकानां चोच्चावचानां मागधानामधिकारिणां सेवावृद्धानां परिजनानां च तं प्रति सघृणं वर्तनम्।

नाशक्नोच्च स्वभावत एकाक्यपि मितव्यवहारोऽपि सर्वतोव्यापिनं जुगुप्सानुप्राणितं तं व्यवहारमुपेक्षितुम्।

शनैः शनैर्मागधशासनयन्त्रस्य दृढतरीकरणे तस्य साऽभिरुचिः, मागधप्रजाजनानां जीवनस्तरस्य समुन्नयने तस्य स आग्रहः, मागधराज्यसीमानां विस्तारे तस्य स उत्साहः, मागधसेनाबलस्य सक्षमतरीकरण स अभिनिवेशः, नवीनानां रणयन्त्राणां परिकल्पने तस्य तदौत्सुक्यं...सर्वमेव...अस्तं जगाम।

एवं मानसमर्मव्यापिना तीव्रेणौदासीन्येन भारभूतं जीवनं कथमपि यापयन् स, एकदा, पश्चिमाम्बुनिधौ निमज्ज्य प्रशमयितुमिव स्वसंतापमपरदिक्प्रान्तं प्रविशति चण्डकिरणे सहस्रकिरण आश्विनेये, भोगनिद्राऽऽलसालसपरिजनं विहाय प्रासादं मार्गयन्निव दुर्लभं मनःप्रासादं, कर्तव्यशिथिलैः रक्षाधिकृतैरपरिलक्षितनिर्गम एकाक्येव, वैश्वामित्रनिदाघदाहविरतिमासन्नप्रायां निवेदयितुमिवाऽऽतपक्लान्तकोमलपल्लवाभ्यो लताभ्यो मन्दं मन्दं वहता विकसितविविधकुसुमामोदभारजातजडिम्ना समीरणेन सस्नेहं स्पृश्यमानमविगणय्य तीव्रतपनतापं मधुसंचयार्थं विकचपुष्पवाटिकास्वनवरतं भ्रमतां भ्रमराणां गुञ्जन गुञ्जितं, स्तब्धप्रायाणां तन्द्रालसानामिव महावृक्षाणां घनपल्लवासु शाखाप्रशाखासु निलीनानां दिवसावसानं समीपकल्पमनुभूय सायंक्षुधोपशमनार्थमुद्यमं कर्तुं परस्परं बोधयतामिवोच्चैर्विरुवतां पतत्रिणां कूजितैः शब्दितं निर्जनप्रायमतिविशालं प्रासादाऽऽरामं प्रविश्यैकस्मिन् नातिदूरावस्थिते गहनविविधलतावितानसंछादितसर्वप्रांते निष्कारणपरिश्रान्तो विश्रमितुं समुपाविशत्।

क्लान्तमुपविष्टस्य, स्वात्मनैव सार्धं किमपि किमपि विसंगतप्रायं चिन्तयतः

CC-0 Pulwama Collection. Digitzed by eGangotri

प्रायं चिन्तयत:, शनै: शनैरालस्यजडे लोचने निमीलयतस्तस्य सा तन्द्राऽकस्मादुद्भूतेन केनचित् सूक्ष्मेणाऽपि तीक्ष्णेन कोलाहलेन भग्नाऽभवत् ।

'कुत: खल्वयम्' इति सन्त्रासेनेवोन्मील्य जड आरक्ते नयने, कुञ्जाभ्यन्तर एवेतस्ततोऽवलोकयन् अपश्यदेकं पतत्रियुगलं लतागृहे सद्य: प्रविश्यान्तर्निमितस्वनीडसमीपे समुपविश्य तदन्त:स्थितानां यवीयसां क्षुधातुराणामावेशचञ्चलानां स्वपितरो: स्नेहदृष्टिमाक्रष्टुमहमहमिकया विरुवतां स्वापत्यानामीषद्विवृतेषु किञ्चित्कठोरेष्वारक्तेषु चञ्चुपुटेषु सायंभोजनकणान् महता वात्सल्येन ददत् ।

अदृष्टपूर्वमिव तत्साधारणं दृश्यमादौ विमनस्कतया ततो मनोयोगपूर्वकं ततश्च सकौतुकमवलोकयत: क्रमश: न्यूनीभवत्संत्रासस्य तस्योदभून्मनसि—

'सर्व: खलु परार्थमेव चेष्टमान:···परार्थमेव विविधानि कष्टानि सहमान:···परार्थमेव अनेका आपदस्तरन्···समवलोक्यतेऽस्मिन् संसारे । तेषां स्नेहेन कृतकृत्यंमन्य: । न कस्यापि···क्षुद्रतमस्य कीटकस्य वा वराकस्यैतस्य पतत्रियुगलस्य वा महाप्रतापशालिन: पुरुषवरेण्यस्य वालौकिकलावण्यशालिन: रमणीरत्नस्य वा···प्रवृत्ति: स्वार्थमात्रसाधनपरा समुपलभ्यते ।'

'निसर्गस्यैतादृश्येव प्रवृत्ति: ।'

'परन्तु··परन्तु···यद्येवं तर्हि ममेयं सर्वा चेष्टा···ममाऽयं सर्व उद्यम:-अथवा ममैतज्जीवनमेव-कस्य कृते ? कं खल्वात्माभिन्नं मन्यमानस्तदर्थमेतानि विविधानि कष्टानि सहे ?···न कमपि । न खलु मम कोऽपि । न खलु आसीन्मम कोऽप्याबाल्यात्···परमविश्वासार्ह:···अभिन्नहृदय:···निरतिशयस्नेहविषय: ।'

एकाक्येव स्वभावेन···परिस्थित्या चाधिकतर एवैकाकी कृतोऽहम् । पिता ज्येष्ठा माता च···द्वावप्युदासीनौ दृष्टौ मयाऽऽजन्मन एव । जनन्या भगिन्याश्च···स्वाभाविकं स्नेहमुपभोक्तुं प्रवृत्त एव सहसा दूरेऽध्ययनार्थं किलानिच्छन्नपि प्रेषित: । तत्र च कर्तव्यकठोरैर्गुरुवरेण्यैर्मयि म्लानचित्तेऽद्वितीयगुणसंपदुत्पिपादयिषया तथाऽहोरात्रं प्रयतितं यथा मम मानवमात्रसुलभा: प्रस्फुटन्त्य: कोमला भावना: स्नेहसिक्ता अनुभूतयश्च दाहमेव···शोषमेव···आत्यन्तिकं प्रापु: । किमिवाऽऽश्चर्यं तर्हि यत् तत: प्रत्यागतोऽहं न केवलं मातु: (मातुरेव केवलं-भगिनी हि पतिगृहं यातासीत्तदा-) वात्सल्यं सम्मानयितुमशक्तमत्यन्तमात्मानमन्वभवम्···अपि तु-साक्षात् स्वजनकमेवैतस्या मम मनोविकृते: कृत उत्तरदायिनं मन्यमानस्तेन निसर्गशत्रुणेव सह व्यवहर्तुं संनद्धमात्मानं साक्षादकरवम् ।··· यत्किञ्चित्कारिण्या क्रूरकौतुकया नियत्या च प्रेर्यमाणोऽवश इव मन्त्रमूढमतिरिव तथाऽवातिष्ठं···यथा···यथा मातुर्वात्सल्यमपि···अनाशयम् । रक्षाबन्धनार्थं स्वयमागता याचनादीनां स्वभगिनीमपि विरक्तहृदयामेव विषण्णमानसामेव पतिगृहं प्रैषयम् ।

CC-0 Pulwama Collection. Digitzed by eGangotri

'न खलु मम कोऽपि…योविमनस्कतां मम दुःखभारभुग्नां मम निरुच्छ्वासतां ममांशतोऽपि मया सह भुञ्जीत ।…एकाकी खल्वहम्…आ जन्मनः ।…अपि नाम…एकाक्येव जीवनहतकस्यस्यान्तं……।'

चिन्तयत एवेत्थं किमपि किमपि तस्य कर्णपथमगात्…निःशब्दं निर्गत्य प्रासादात् चौरगत्याऽऽरामान्तःप्रविष्टानां समीपवर्तिवटवृक्षछायायामेकत्रभूतानां कतिपयानां बालकानां संकल्पितविविधक्रीडाचर्चामुखराणां कोलाहलः । लक्षयाञ्चकार च तस्मिन् विविधस्वरमिश्रितेऽपि भात्रोः हल्लवेहल्लयोः सुस्पष्टौ स्वरौ ।

'नूनमिमौ द्वावपि तन्द्रालसानां परिचारिकाणां निषेधमुल्लंघ्यान्यैः सामन्तपुत्रैः समवयस्कैः सह क्रीडितुमातपेऽस्मिन् तीव्रे…आरामे प्रविष्टौ…अजानन्तौ ममेहात्यन्तमनपेक्षितां निःशब्दां समुपस्थितिं…यथेच्छं क्रीडत' इति विभाव्य पूर्ववद् विचारमग्नो बभूव ।

बहोः कालादनन्तरमिव तस्य सा विचारतन्द्राऽकस्मादभज्यत क्रीडाविरतानां सोष्मणां तेषां बालकानां मध्ये सहसोद्भूतेन तीव्रेण केनचिद् विवादेन ।

'किं नु खल्वधुना समापतितम्-'इति मन्दया जिज्ञासया दत्तावधानश्च क्षणमात्रानन्तरमन्वमिनोत् हल्लवेहल्लौ तीव्रं कलहायमानौ ।…'कृतकराजसभाधिवेशनक्रीडाप्रवृत्तौ द्वावप्येतौ 'कः खलु राजसिंहासनमधितितिष्ठतु—' इत्यस्मिन् विषये परस्परेण सह विवदतः…स्वैः स्वैरनुयायिभिः सावेशं, समर्थ्यमानौ ।… अहो, एतयोः कृतकेऽपि सिंहासनाधिरोहणेऽभिनिवेश ।' इति विचारयन्, सविषादं स्मयमानस्तयोः स्वस्वाधिकारसमर्थनपरास्ता युवती बालिशा अपि सावेशाः सकौतुकमिव शृण्वन् आस्त ।

कतिपयक्षणानन्तरं च, सः तयोस्तं विवादं सीमामतिक्रामन्तमिवानुभूय यावल्लतागृहान्निष्क्रम्य तौ सान्त्वयितुमुत्तिष्ठति तावत्तस्य श्रुतिपथमगात् दहदिव तन्मर्माणि वचो हल्लस्य—'विरम रे, कनिष्ठ !, विरमास्मात् वृथाप्रयासात् ! शृणु । अहमस्मि युवराजः । मृते भ्रातरि राजाऽहमेव भविष्यामि । नान्यः कोऽपि । शृणु । नास्ति भ्रातुः कोऽप्यात्मजः । भविष्यति वा, यः सिंहासनमधिरोक्ष्यति । अतः क्रीडायामप्यस्यामहमेव राजा भविष्यामि । यदि तु त्वं हठं न त्यक्ष्यसि… तर्ह्यहं सामन्तान् ममेमान्…… । किम् ? …भीषयसे माम् ? अनुभव तर्हि फलमात्मन उद्दण्डतायाः ।' श्रुत्वा च तन्मर्माहतो भूमिबद्ध इव मन्त्रमूढ इव जडीभूत इव पदमेकमप्यग्रेऽक्षिपन् विलुप्तस्थलकालव्यक्तिविवेकस्तीव्रतमखेदाऽभिभूतः नावेत् । तस्मिन्नेव क्षणे कलहकोलाहलमाकर्ण्य प्रासादान्तः पुरात् ससंभ्रममागतायाः सन्त्रस्तायाः हल्लवेहल्लयोरुपमातुरुपालम्भपरं तत्सम्बोधनं तयोश्च परित्यज्य क्रीडाकौतुकं-क्रुद्धयोरेव-नयनाभ्यामारक्ताभ्यां परस्परमवलोकयतोरेव-स्वस्वसुहृद्भिः सह ततो निष्क्रमणम् ।

(सावशेषः)

CC-0 Pulwama Collection. Digitzed by eGangotri

व्यतीत इव युगे, महता कष्टेन प्रकृतिं कथञ्चिदापन्नस्तीव्रया जुगुप्सयैव केवलया प्रेर्यमाणः प्रबलया तितिक्षयैव केवलया नुद्यमानोऽभिभूत इवाऽऽविष्ट इव तस्माल्लताकुञ्जान्निर्गत्य सर्वथाऽप्रत्याशितां तस्य तत्रोपस्थितिमकस्मात् साक्षात्कृत्य भीतानां विस्मितानामारामिकाणां सायंसमये विकसद्विविधकुसुमावचयार्थमारामं प्रविष्टानां ससंभ्रमाः प्रणतीरविदन्नेवाश्वशालाया अभिमुखीबभूव यन्त्रचालित इव मन्त्रप्रेरित इव नियतिनिर्दिष्ट। इव तत्र च कार्यरतेन प्रधानेनाश्वपालकेनानुमाय स्वामिनः निःशब्दस्यापि मनोभावं प्रणतिपुरःसरं सेवायां समुपस्थापितं प्रभञ्जनं बहोः कालादनन्तरं स्वसमीप आगतं प्रियं स्वस्वामिनमवलोक्य चकितं हृषितं 'विपुलं पुच्छमजस्रं धुन्वानं' विशालाभ्यां साकूताभ्यां नयनाभ्यां तिर्यगवलोकयद्भ्यां पिबन्तमिव स्वस्वामिनं ह्रेषारवमुखरमारुह्याऽऽवेशातिरेकेण नृत्यतेवोत्सुकोत्सुकेनाधीरेण तेनोह्यमान···आहूमान इव नियत्या··· प्रासादमहाद्वारान्निश्चक्राम।

अविदंश्च स्थलकालव्यक्तिविधा, दैववशाद्गृहीतोत्तरदिक्, चचाल··· एकाकी···समाकृष्यमाण इव कयाचिदतर्क्यशक्त्या शक्त्या।

चचाल एकाकी एव···आक्रामति चराचरसृष्टिं सान्ध्ये तिमिर आपूर्य तन्मानसं बहिः प्रवहति नैराश्य इव घोरे, प्रकटीभवत्सु गगनांगणे तज्जीवनरूपककथावस्तुपरिवर्तनमवलोकयितुमुत्सुकोत्सुकेष्विवासंख्येषु नक्षत्रेषु, प्रसरत्सु सर्वतो मञ्जुलेषु तद्भाग्यप्रसादमासन्नप्रायं निगदत्स्विव घण्टानिनादेषु देवतायतनशिखरेभ्यः,···विहाय विविधकार्यव्यग्रनागरिकजनसङ्कुलान् नगरमार्गान् क्रीडामुखरबालकवृन्दव्याकुलान् उपनगरमार्गांश्च,··· अनभिज्ञो दृष्ट्वा तं तथाविधं चकितानां भीत्या मार्गात् ससम्भ्रममपसरतां नागरिकाणां प्रणामान्,···अपरिलक्षयन्नात्मानं राजगृहाद्बहिर्निर्गतं प्रभञ्जनेन च शीघ्रगामिना सर्वथाऽपरिचितेनाविद्यमानप्रायेण मार्गेण केनचिदुह्यमानम्,···अननुभवन् घनीभवत् दीर्घदीर्घतरयामानन्तरं च शनैः शनैः विरलीभवत् नैशं तमः,···अविदन् क्रमशः प्रबलतरीभवन्तमारुणं प्रकाशम्, उदीयमानं गगनमध्यमारोहन्तं पश्चिमाम्बुनिधौ निमज्जन्तं दिनमणिम्,···अजानन् पुनरपि समुद्भवत् घनीभवच्च नैशं तमः,···नितान्तमनभिज्ञो मार्गस्य कदाचिद्दुष्प्रवेश्यवनप्रायस्यान्यदा मृदुलशाद्वलाऽऽच्छन्नस्य कदाचिन्मरुप्रायस्यान्यदा संततप्रवहत्स्वच्छनिर्झरजलाप्लावितस्य कदाचिद्दुरारोहविषमस्थलमयस्यान्यदा करतलसमतलस्य कदाचित् क्षुधातुरहिंस्रश्वापदतर्जकगर्जननिनादितस्यान्यदा मञ्जुकूजत्पतत्रिरवगुञ्जितस्य।

चलंश्च,···श्रमातिरेकशिथिलगात्रात् प्रवहत्स्वेदधाराक्लिन्नशरीरात् फेनिलमुखात् विभ्रांतनयनात् प्रदीर्घमुष्णं च श्वसतः प्रभञ्जनादकस्मात्स्खलितपदात् सहसा परिभ्रष्टो, मार्गशायिनो विशालपाषाणशिलाखण्डस्यैकस्य दन्तुरेऽग्रे निपतितः, शिरसि श्रमबिन्दुक्लिन्नशिरसिजे तीव्रमाहतः, क्षणमात्रं मर्मान्तिकवेदनापीडितः, प्रवहद्रुधिरधारादूषितचकितदृष्टिरथास्मिन्नेव क्षणे मुमूर्च्छ···अत्यन्तम्।

CC-0 Pulwama Collection. Digitzed by eGangotri

# अष्टादशः परिच्छेदः

व्यतीतेष्विव युगेषु च महता प्रयत्नेन नयने जडे समुन्मीलयितुमयतत।

शशाक तु समुद्घाटयितुं दक्षिणमेव नयनं केवलम्।···विस्मयेनोन्नमय्य कथमपि दुर्बलं वेपमानं दक्षिणं भुजं, स्पृशन् तेन वामनेत्रभागम्, अन्वभूत् तं कदाचित् व्रणपट्टिकयाऽऽवृतमस्तकार्द्धया पिहितम्। अन्वभूच्च तत्समकालमेव मर्मान्तिकां तीव्रां शिरोव्रणवेदनाम्।

तत्क्षणमेव परित्यज्य सर्वां चेष्टां, निश्चेतन इव शिथिलितगात्रः, कतिपय क्षणानन्तरं न्यूनीभूतायां तस्यां वेदनायां, पुनरपि, मस्तकमनुन्नमयन्नेव, शुष्यन्मुखं सर्वाङ्गदाहकमतितीव्रज्वरसंतापं चाविगणयन्नेव, 'कुत्र खल्वानीतोऽहं प्रभञ्जनेन' इति क्षीणविस्मयपरवशः शयनपतित एव दक्षिणमेव नेत्रमितस्ततो व्यापारयामास।

अवलोकयामास च केवलमात्मानं नातिविशालेऽच्छसुधोपलेपनस्वच्छभित्तिके विकसिताऽऽरामकुसुमाऽऽमोदसुवासिताभ्यन्तरे बृहद्वातायनप्रविशत्सूर्यप्रकाशोज्ज्वलिते साधारणवृत्तान्त एकस्मिन् कक्षेऽत्यन्तमपरिचितेऽनतिमृदुलायामपि सुखदायां शय्यायां शयितं, केनचित् साधारणेनाऽपि निर्मलेन सुवासितेन मृदुलेन वस्त्रेणाऽऽच्छादितसर्वाङ्गम्।

अवलोकयामास च, ज्वलन्त्या तिक्तस्वादया जिह्वयाऽऽर्द्रयन्नेव स्वौ शुष्कप्रायौ ओष्ठौ, स्वस्याऽऽननस्यैवोपरि सहसाऽवनम्रमेकं चिन्ताम्लानमपि खिन्ननयनमपि विलुप्तस्मितमप्यप्रत्याख्येयलावण्यं गौरीगौरं सुनासं किञ्चिदाकुञ्चिततदवलोकनतत्परनयनराजीवं पक्ष्मललोचनं प्रोन्नतललाटलम्बमानलट्वालटभं किञ्चिदुच्छ्वसितसुकोमलनासापुटं किञ्चिद्विलग्नौष्ठमुद्रमीषत्परिलक्ष्यमाणसुदर्शनदशनमौक्तिकं मुखं कस्याश्चिद्युवत्याः।

अश्रद्दधान एवाऽऽत्मनः प्रत्ययं, 'किं नु स्वप्नविभ्रमोऽयम्···उत मतिभ्रमः··· ज्वरविलास' इति विनिश्चेतुं प्रयतमान एव, ददर्श तत् संज्ञां प्रत्यापन्नं तं वीक्ष्य सहसा विकसितस्मितं विलीनचिन्ताभ्रं शतगुणितलावण्यप्रभम्। अनुबभूव च केनापि मञ्जुलरणत्कङ्कणेन गौरेण सुकुमारेण शतदलदलकोमलतलेन करेण चमसेन राजतेन मुखान्तर्दीयमानं कदुष्णमोषधिगन्धि मधुरं जलम्। यथेष्टं

CC-0 Pulwama Collection. Digitzed by eGangotri

पीत्वा च तत् तृप्तः, किञ्चिन्न्यूनीभूतज्वरसंतापो, दीर्घं निःश्वस्य, पिबन्नेव नेत्रेण तन्मुखकमलम्, अनिच्छन्नेव तस्य वास्तविकतां परीक्षितुं, वीज्यमान इव गोयमान इव चुम्ब्यमान इव तस्य स्नेहस्निग्धया दृष्ट्या, शान्तस्वान्तः, निराकुलहृदयो, विश्रब्धमानसो, बालक इव शनैः शनैः निद्रायाः प्रगाढाया वश्यतामयात् ॥

चिराच्च प्रबुद्धोऽपश्यदात्मान तस्मिन्नेव कक्षे प्रज्वलितसान्ध्यदीपालोकालोकिते प्रसरद्धूपलहरीसुवासिते तस्यां शय्यायां शयितं तेनैव दुकूलेनाऽऽच्छादितसर्वाङ्गम् ।

'न खल्वयं स्वप्नविभ्रम, उत मतिभ्रम, उत ज्वरविलास' इति जातप्रत्ययश्च तदेवाननकमलं द्रष्टुं पूर्ववद्दक्षिणं नेत्रमितस्ततो व्यापारयामास । अदृष्ट्वा च तद्विचलितः समुद्विग्नउत्तेजितश्च यावत् स्वं शरीरमुत्थापयितुं दक्षिणभुजबलेन प्रयतते तावदश्रृणोत् कस्यचिद्धीरगम्भीरां वाणीं—'मा आयासय स्वात्मानं···युवक !···स्वल्पेनापि विचलनेन गभीरस्तव शिरोव्रणः पुनः स्फुटिष्यति । तद्विश्राम्य निश्चिन्तः । अपरिचितेष्वपि सुहृद्हस्तेषु निपतितोऽसि । विश्राम्य निराकुल'—इति समाश्वासयन्तीम् । अपश्यच्च क्षणमात्रानन्तरं स्वस्याऽऽननस्यैवोपरि अवनम्रं कस्यचिद्वृद्धस्य भव्यं गौरवर्णं धवलकेशं सायंपूजाकृतसिन्दूररेखालंङ्कृतकूर्चं क्लान्ततीक्ष्णनयनं सस्मितमाननम् ।

यावच्च किञ्चिद्वक्तुं चेष्टते तावत् स वृद्धः, निषिध्य तस्य तावन्मात्रमपि परिश्रममिंगितेन, संस्पृश्य तस्य दक्षिणं मणिबन्धं संवेदनानिपुणाभिरङ्गुलीभिः नाडीपरिस्पन्दनं परीक्षाञ्चक्रे । व्यावर्त्य च मुखं, कक्षाभ्यन्तर एव समीप एवोपविष्टं कञ्चित् समुद्दिश्यागदत्—'दिष्ट्या ज्वरप्रकोपोऽपि न्यूनीभूतोऽस्य परिलक्ष्यते । नूनं प्राणसंकटां विषमामवस्थामुत्तीर्णोऽयम् ! वयस्य ! सत्यम् अस्य प्राणा भवता—अथवा भवतो दुहित्रैव-यमदूतानां पाशेभ्यो मोचिताः । नूनम् एतादृशी रुग्णपरिचर्या मया भैषज्यवृद्धेनापि न कदाऽपि दृष्टा ।'

'भिषग्वर्य !'-प्रत्यवदत् अन्यः, रुग्णशय्यासमीपमिव शनैः शनैरागच्छन्, 'न कोऽपि कस्यापि प्राणान् यमदूतानां पाशेभ्यो मोचयितुं समर्थः । आवां मङ्गलाया मातुः प्राणान् मोचयितुं किं न येतिवहे ? परन्तु···सा···अनवलोक्यैव 'प्रतिपच्चंद्रनिभं' दुहितुर्मुखम्···इत···। (दीर्घं निःश्वस्य) अथवाऽलमेतेन ।···वत्सस्य भागधेयमेव प्रबलम् ।···कुतोऽन्यथाऽस्मिन् विपिने तस्मिन् घोरतिमिरायां रजन्यां विसंज्ञमसाहाय्यं तथा निपतिते, श्रमातुरस्याप्येतत्तुरगस्य नियत्या समुपदिश्यमानमार्गस्येवेह स्वयमागमनं, पिहिते प्राकारमहाद्वारे खुरेणाऽऽहत्याऽऽहत्य सुखं प्रसुप्तानां सेवकानां प्रबोधनम्, अनश्ववाहं फेनिलमुखं रक्तघूर्णमाननयनं प्रस्वदत्सर्वाङ्गं तं दृष्ट्वा चकितानामपि प्रहरमात्रावशिष्टायां तस्यां प्रतिपन्निशायां

CC-0 Pulwama Collection. Digitzed by eGangotri

विहाय सुखशय्यां 'वन्यप्राणिभयङ्करे' विपिने गन्तुमनुत्सुकानां तेषां संवादमाकर्ण्य किंचिद्विस्मितताया आदित एवोन्निद्राया अशान्तस्वान्ताया मङ्गलाया विहाय शयनकक्षं प्राङ्गणेऽवतीर्य स्वयं तेषां संप्रेषणं, तेन च तुरगेन सूचिभेद्ये तमसि समुपदिश्यमानमार्गाणां तेषां समय एवास्य समीप उपस्थानं, मूर्च्छितस्य प्रवहद्रुधिरक्लिन्नमस्तकस्यास्य तैरिहाऽऽनयनं, भवतश्च काकतालीयन्यायेन वा नियतिनिर्देशेन वा तस्मिन्नेव दिवस इहाऽऽगतस्य परिचर्यायां स्थापनम् ?···एवमेतत्। वत्सस्य भागधेयमेव प्रबलम्। नात्र संशयलेशोऽपि'। गदंश्चैव तस्य शय्यायाः समीप आगत्य सवात्सल्यं तस्य वक्षसि हस्तं न्यधात्।

किञ्चित्परिवर्तितमुखश्चाजातशत्रुरवलोकयामास स्वाश्रयदातारं वार्धकेनेषदवनमितपूर्वकायं महाप्रमाणं गौरवर्णं बलिष्ठं किञ्चिदवनतवृषस्कन्धं रेखाङ्कितविशालभालपट्टं नातिमहार्होत्तरीयाऽऽवृत्तोत्तमाङ्गं धवलघनभ्रूलताऽऽच्छन्नप्रायाभ्यामनुभवक्लान्ताभ्यामपि मर्मस्पर्शिभ्यां नयनाभ्यां तमेव सस्मित स्नपयन्तमिव वात्सल्यामृतेन।

अन्वभूच्च तत्क्षण एव समाश्वासयित्रीं प्रशामिकां कामपि मनोवस्थाम्··· आबाल्यादननुभूताम्।

'सत्यमेव वत्सः प्राणसंकटां विषमां स्थितिमुत्तीर्णो, भिषग्वर्य !' अब्रवीत् कतिपयक्षणानन्तरं स वृद्धः। 'तत् प्रदर्शयतु भवान् स्वमात्रनिर्मितानां···(सहासं) स्वमात्रप्रशंसितानां च···संजीवनीकल्पानां बलप्रदानां पाकानां चूर्णानां लेह्यानां रसानां···(सहासं) सर्वेषामेव स्वमात्रज्ञातानां महौषधानाम्···प्रभावम्···अविलम्बमेव।···न खल्वेतादृशः रुग्णो भवता पुनर्लप्स्यते।···(सहासं) न वैतादृशो धन्वन्तरिः···अनेन।···(सहासं) न चायं रुग्णो-मंगलेव-कटूनि भवत औषधानि (-सर्वाण्येव भवत औषधानि किमिति कटूनि ?) प्राणपणेन प्रतिरोत्स्यति।··· धीरः खल्वयम्।'

भिषग्वर्यस्तु सहासं···'वृथैवास्माकं मङ्गला भवता निन्द्यत एवम्' इति प्रत्युत्तरयन्, किञ्चिद्विचारमग्नः, संचिन्त्यौषधियोजनां स्वसुहृदमब्रवीत्-'प्रकृत्या बलवान् सम्प्रति नीरोगश्चायं मम रुग्णः—पश्यत एव भवतश्चकितचकितस्य शक्तिमननुभूतपूर्वां लप्स्यत इति (···सहासं···) शपे मम ओषधिविज्ञानेन।···एक एव त्वनुरोधः। चिरोषिते मयि श्वः इतः प्रस्थितेऽवन्तिकायै···मङ्गलैवास्यौषधोपचारदायित्वं स्वीकरोतु ...(सहासं) सेवकास्तु सर्व एव भवतो बुद्धिप्रकर्षशालिनः। तथापि नाहं रुग्णमिमं तेषां हस्ते समर्प्य···निराकुलः···इतो गन्तुमुत्सहे। भवांस्तु नानाविधकार्यमग्नः कदाचिदेवास्योत्तरदायित्वं वोढुं समयं प्राप्स्यति।···तदाह्वयतु श्रीमान्···आत्मनोऽद्वितीयं प्राणाधिकप्रियं तत् कन्या-

CC-0 Pulwama Collection. Digitzed by eGangotri

रत्नम्। सविस्तरं कथयित्वा तस्य औषधयोजनां पथ्यविधां च…निश्चिन्तो भवितुमिच्छामि।…महत् खलु भाग्यमेतस्य यद्वशादयमेतादृशीं परिचारिकां लब्धवान्।…सेवैव तस्या…इमं प्राणसंकटादस्मात् समुदतारयत्।…औषधयस्तु मम निमित्तमात्रम्।'

'…अलमलमतिस्तवनेन।…श्रुत्वैतत् ''कदाचित् सा (सहासम्) आदित निर्मर्यादेन जनकवात्सल्येन दुर्विनीतायमाना…स्वच्छन्दा…न जाने…कमिवाऽऽत्मानं संचितयेद्-' इति ब्रुवंश्च स गृहस्वामी मेघस्तनितगम्भीरेणापि स्नेहकोमलेन स्वरेणस्वपुत्रीमुच्चैराह्वयत्।

श्रुत्वैव तदाह्वानं, तावत्कालपर्यन्तं तयोर्द्वयोर्वृद्धयोः स्नेहसंलापमश्रुतपूर्वसदृशं प्रत्यक्षरं मीलितलोचनं निराकुलं चाऽऽकर्ण्य स्वाश्रयदातुर्विषये-वस्तुतः स्वप्नदृष्टांया इव तस्या युवतेर्विषये-अधिकाधिकं ज्ञातुं प्रयतमानस्य प्रशान्तस्वान्तस्याजातशत्रोः सर्वाणीन्द्रियाणि श्रोत्रमयानीव…सर्वा वृत्तयः शब्दग्रहणसमुत्सुका इव…सर्वे च प्राणा मस्तकोत्थापनप्रयत्नपरा इव बभूवुः।

अन्यस्मिन्नेव तु क्षणऽननुभूतपूर्वेण संकोचेन कैशोर्यमात्रसुलभेन लज्जाभावेन सहसा समाक्रान्त इव, परित्यज्य मस्तकोत्थापनप्रयत्नान्, प्रयतमानः ससाध्वसमिवाऽऽत्मान पर्यवस्थापयितुम्…आपाततः शान्तः…श्रोत्रगतप्राणः…कक्षाभ्यन्तर आगमनं तस्याः प्रतिपालयामास।

अन्वभूत् कतिपयक्षणानन्तरमेव रोमाञ्चितमिव सुवासितमिव प्रफुल्लितमिवकक्षान्तर्वातावरणम्। अशृणोच्च गृहस्वामिनो वात्सल्यानुप्राणितं सम्बोधनं 'मङ्गले!…एतेऽस्माकं भिषग्वर्या-'आवान्तिकानां चिररुग्णानां सुखरुग्णानां च विषये दुश्चिन्ताभिरहर्निशं पीड्यमानाः—श्वः हस्ते तव युवकमिमं समर्प्य निराकलीभूयैतः प्रस्थानमवन्तिकायै कर्तुं दृढसङ्कल्पाः। मया बहुवारं प्रार्थिता अपि स्वनिश्चयान्न चलन्ति। तत्…त्वं प्रयतस्व। तवानुरोधं त्वेते न तिरस्करिष्यन्ति-' इति,…तां च चिरप्रतीक्षितां कर्णयोरमृतधारा इव वर्षन्तीं मञ्जुलपूजाघण्टिकानिनादिनीमश्रुतपूर्वामपि चिरपरिचितामिव वाणीं बालहठेनेव सहजाधिकारेणेव भिषग्वर्यं तैस्तैर्मिषैस्त्यक्तुं प्रस्थाननिश्चयमनुरुद्ध्यमानामसफलीभूते च प्रयत्ने रुष्टामिव सोपालम्भामिव भिषग्वर्याद् औषधयोजनां पथ्यविधां चसावधानतया प्रतिपद्यमानाम्।

अननुकूलत्वात्तु नक्षत्राणामनिष्टत्वाच्च ग्रहाणां ''तन्मुखकमलरामणीयकमनसि पर्युत्सुके पुनरप्येकवारमालेखितुं नाशकत् तस्यां निशि स्वप्नसृष्टिविहारार्थम्।

द्वितीयादेव तु दिनात् प्रभृति…तस्य सर्वाण्येव नक्षत्राणि सर्वे एव ग्रहाः…

CC-0 Pulwama Collection. Digitzed by eGangotri

स्नेहपरवशा इव कौतुकप्रेरिता इवानुतापतप्ता इवानुकूलतमा बभूवुः ।

अपरेद्युरेव हि—प्रगाढनिद्राया जाग्रदेव स गृहस्वामिनस्तां दुहितरं··· सस्मिताभ्यां निश्छलाभ्यां विशालाभ्यां नयनाभ्यां सुखशयनपृच्छायै स्वयमुपस्थितां मूर्तिमतोमुषसमिव स्वशय्यायाः समीप उपस्थितामवलोकयामास ।

यथा यथा चानिर्वर्णनीयसुखभारमन्थरगति दिवसं विविधसुखदस्वप्नालङ्कृता निशा, तां च परमाह्लादकां विश्रम्भमयो दिवसश्चक्रनेमिक्रमेणानुसर्तुमारेभाते···तथा तथा भाग्यस्य साऽनुकूलता शुक्लपक्षचन्द्रकलेव क्रमशो वृद्धिमेव प्राप्तुं प्रचक्रमे ।

प्रकृत्यैव बलवान् तत्रापि भिषग्वर्याणां सिद्धैरौषधैरारोग्यं निर्दोषं लम्भितस्तत्रापि मङ्गलासदृशयाऽतिनिपुणया दक्षया स्मितभाषिण्या प्रियदर्शिन्या युवत्या स्वनिर्विशेषं परिचरितः सः समयेनात्यल्पेनैव न केवलं स्वास्थ्यं पूर्ववदलभत··· अपितु-सामर्थ्यातिशयमप्यननुभूतचरमन्वभूत् । पश्यन्त्या एव च तस्याः कौतुकविस्फारिताक्षं स रुग्णशय्यां भोक्तुं, रुग्णकक्षाद्बहिर्गन्तुं, प्रासाद आरामे च सर्वत्र यथेच्छं भ्रमितुं, विस्तृतेषु सस्यश्यामलेषु गृहस्वामिनः क्षेत्रेषु च विहर्तुं प्रारभत ।

आ जन्मनः क्षीणा, नियत्या क्रूरया क्रमशो भोगविषयतामानीतैस्तैस्तैः कटुभिरनुभवैश्चोत्तरोत्तरं क्षीणतरतामापादिता, राजसत्ताधिग्रहणादनन्तरं विनष्टप्राया तस्य मनःशान्तिः सर्वथाऽपरिचितेऽपि तस्मिननिर्वर्णनीयतृप्तिभावनौतप्रोतेऽनुभवमात्रज्ञेयविश्वासभावनाऽऽपूरिते स्नेहमये नैसर्गिके वातावरणे परां पुष्टिमभजत ।

कृतदेहपरिवर्तमिवाऽऽगृहीतजन्मान्तरमिव नूतनजगत् प्रविष्टमिवाऽऽत्मानं सोऽन्वभवत् ।

यथास्थितौ च सन्तोषं परमम् ।

मङ्गलाऽपि, नितान्तमपरिचितेनापि जन्मजन्मान्तरपरिचितेनेव भासमानेन, सदाप्रसन्नया नियत्या स्वयमुपायनीकृतेनेव तेन बलिष्ठेन महाप्रमाणेनोग्राकृतिनाऽपि परमाकर्षकप्रभावसम्पन्नेन यूना प्रथमक्षणादेवाऽऽकृष्टा, चक्षुरागरज्यन्मानसा, आ अरुणोदयाद्दिवसावसानपर्यन्तमनुल्लङ्घ्य कुलमर्यादा, ईषदपि अनवधीर्येतराणि दैनंदिनानि गृहकार्याणि, तमेव परिचरन्ती, अनुपेक्ष्य लक्ष्मणरेखां विवेकस्य तस्मिन् परं विश्वसन्ती, पितुरनुज्ञया प्रासाद-आरामे दिगन्तस्पर्शिषु स्वक्षेत्रेषु प्रान्तव्यापिषु निविडेषु विपिनेषु च तेन सह निश्छलं पर्यटितुमारभत ।

कालेन तेनाद्भुतेन परमसुखदेनाऽऽवरणेऽसत्प्राये शनैः शनैः विलयमात्यंतिकं प्रापिते···तयोर्यूनोस्तत् सौहार्दं तत् सौमनस्यम्···अनुच्चारितायामपि प्रतिक्षणमनुभवविषयोभवन्त्यामनिवर्णनोयायां कस्यामपि गूढरम्यायां भावनायां क्रमशः पर्यणमत् ।

अविदन्तावेव तौ शनैः शनैरबध्येतां स्मयमानया नियत्याऽतिसूक्ष्मया 'बिसतन्तुकोमलयाऽ'पि प्रबलया कयाऽपि भावनारज्ज्वा···साक्षीकृत्य सूर्याचन्द्रमसौ ।

CC-0 Pulwama Collection. Digitzed by eGangotri

# एकोनविंशः परिच्छेदः

व्यत्येतुं च वेगेनाऽऽरेभे तयोर्द्वयोर्दिवारात्रं सुखभरेणोत्पतदिव, तयोः सुखेनप्रमुदितेव माता सर्वंसहा परित्यज्य जीर्णपीतपल्लववसनं महतोत्साहेन नूतनहरितपल्लववसनं परिधातुं, समग्रा सृष्टिरवलोक्य तस्य मनोव्यथाया अवसानमत्यन्तं हृष्टेव मन्ददक्षिणपवनमिषेण निःश्वसितुं, मञ्जुकूजत्पिकस्वर-व्याजेन सुवार्तामिमां सर्वस्मै जनाय निवेदयितुं, दूरतः परिदृश्यमानोत्तुङ्गदन्तुर-शिखरश्रेणिः नगाधिराजस्तन्मोदमुदित इव विहाय हैमन्तममङ्गलमुदासीनं मलिनं परिधानं वासन्तिकं—दिवा सौवर्णं रात्रौ च राजतं-हिमवस्त्रं परिधाय नीले निरभ्रे प्रसन्ने गगने काशितुं च।

तयोर्द्वयोः हृदयकुसुमयोः विकासवार्त्तामद्भुतां श्रावयितुमिव सर्वान् विकसितकुसुमस्तबकाद् महता संरम्भेण भ्रमितुमारेभिरे भ्रमराः परं हृष्टाः।

तयोर्जीवनसाफल्यं साक्षात्कृत्य रोमाञ्चिता इवाऽऽम्रवृक्षा स्वयमपि-समयात् पूर्वमिव-फलसंपदां वरीतुं प्रचक्रमिरे।

तयोर्मुग्धया प्रीतिश्रिया सह विरचयितुमिव रमणीयं सहनृत्यं वसन्तश्रीः मनोहरमण्डनमण्डिता त्वरमाणहृदयेव-समयात् पूर्वमिव-दिवो धरणीतलेऽवततार निःशब्दम्।

आजन्मनस्तृषितमजातशत्रोस्तु हृदयं, तां प्रीतिं सर्वथाऽप्रत्याशितामाकण्ठ-मनुभूय कृतार्थं, क्षणमात्रमपि लेशमात्रमपि कथञ्चिदपि ग्लानिं तस्याः कल्पयितु-मक्षमं, तां कल्पन्तपर्यन्तमपरिवर्तितामेव निगूढं चकाङ्क्ष।

परन्तु-परिवर्तनशीले संसारे तादृश्या आकाङ्क्षाया वैफल्यं स नातिचिरादे-वानुभवितुमारेभे। कदाचित् कार्ये कस्मिंश्चिद्व्यापृतोऽन्यदा विचारे कस्मिंश्चिन्म-ग्नः सः शनैः शनैस्तां विरम्यैतरकार्यात्तमेव किञ्चित् पृच्छन्त्येक कौतूहलान्वि-तयेव विचारमग्नयेव तदन्तस्तलमवगाहयितुं चेष्टमानयैवैकाग्रया समुत्कटया दृष्ट्या ध्यायन्तीं लक्षयितुमारेभे। क्रमशश्च तस्यास्तां प्रवृत्तिं वर्धमानामन्वभूत। तस्याः निःशब्दमपि स्वतः स्पष्टमभिप्रायमपि।

'प्रीतिबन्धनं परिणयबन्धने परिणमयितुमुत्सुका···इयं···मयि निरतिशयं विश्वसत्यपि···स्वजीवनधाराया मम जीवनधारयासह सम्मेलनात् प्राक् ममेति-

CC-0 Pulwama Collection. Digitzed by eGangotri

वृत्तं ज्ञातुमुन्मनायते । अपेक्षते च मां स्वयं तच्छ्रावयितुम्' इति साक्षात्कुर्वन्नपि··· नोदसहत तस्याः निष्पापाया बालककोमलहृदयायाः समक्षं स्वमतीतं दुःखजडं निरुच्छ्वासं कलङ्कितं जीवनमुद्घाटयितुम् ।

अजानन्निव तदभिप्रायं च स्वयमुपस्थितानपि सन्धीननुकूलतमान् गजनिमीलिकया समुपैक्षत ।

एवं गच्छति काले···एकदाऽपराशामुखमण्डलं परिचुम्बितुमिव गगनमध्यादधोऽवतरति भगवति दिनकरे, चिरप्रतीक्षितं सौभाग्यं तदुपनतकल्पमनुभूय परं मुदितायास्तस्या दिगंगनायाः सुखनिःश्वास इव मन्दं मन्दं वहतीषदुष्णेऽपराह्णकालीने सुरभिसमीरणे,···भोग निद्रायाः सद्योजागरितं गृहस्वामिनमापृच्छ्य, तेन सस्मितमनुमोदितः सः विमनस्कामिवोदासीनामिवानिच्छुकामिव स्वप्रियां वनविहारार्थं कथमप्यनुकूलीकृत्य तया चन्द्रिकाधवलां कृष्णचिह्नालङ्कृतमस्तकामश्वां सौदामिनीमारुढया सह निर्गतः स्वैरमुह्यमानः प्रभञ्जनेन समतिक्रम्य तिर्यक्पतत् पतङ्गकरसंस्पृष्टानि मन्दवातलहरीदोलायमानानि सस्यश्यामलानि क्षेत्राणि नातिचिरादेवाविशन्नातिदूरवर्तिनीं गहनामकालसन्ध्याधूसरितप्रकाशामरण्यानीम्, उपाविशच्च तावन्मात्रेण परिश्रमेण श्रान्तयेव मितभाषिण्योदासीनयेव तयाऽनुरुद्ध···एकस्य प्रवहन्निर्मलशीतलसलिलस्य निर्झरस्य तीरे ।

प्रायतत चानेकविधेन परिहासजल्पितेन चाटुभाषणेन मनोरञ्जककथाकथनेन च तस्य म्लानां क्लान्तां मानसकलीमुन्मीलयितुम् । नालभत तु साफल्यम् ।

तस्यास्तां विमनस्कतामस्वाभाविकीमनुभूय विचारमग्नः, कतिपययुगकल्पक्षणानन्तरं बोधयित्वाऽऽत्मानं विचारतन्द्रायास्तां किंचित् प्रष्टुं तस्या अभिमुखी भूतश्च···अपश्यत्तां व्यावर्त्य मुखकमलं म्लानं समीपवर्तिनो वृक्षस्य तरुणस्य कस्यचिदधःशाखायामेकस्यां निबद्धदृष्टिम् । तद्दृक्पथमनुसरंश्च ददर्शैकं पतत्रियुगलम् आदाय कीटकान् यवीयसा चञ्चुपुटेन स्वं नीडं सद्यः प्रत्यागतं, नीडस्थितानां क्षुधातुराणां प्रकम्पमानकोमलपक्षाणां मुखराणामुन्मुखानामर्भकाणां संमुखं निश्चलं तिष्ठत् क्षणमात्र, ददच्च सान्ध्याऽऽहारग्रासान् तच्चञ्चुपुटेष्वातुरेष्वन्यस्मिन् क्षणे क्रमशः । ददर्श च तामकस्मात् ततः परावर्त्य दृष्टिं, सास्रां तां तस्मिन्नेव निबध्नतीं, तं चाऽऽत्मानमेव ध्यायन्तं दृष्टवा ससंभ्रमं तामधःकृत्य, हरितदूर्वांकुरैः सह क्रीडन्तमिवाऽऽत्मानं प्रकटयन्तीम् ।

असमर्थश्च सोढुं क्षणमात्रमप्यश्रुबिन्दून् स्वप्रियायाः नयनकमलयोः, विधूय सर्वं संकोचं, भावावेशमात्रप्रेर्यमाण उच्छूननाडीलाञ्छितभालप्रदेशोऽधोमुखस्तृणपुष्प एकस्मिन्नाबद्धदृष्टिरवोचत्—

'जानामि तव···सुमुखि ! ···मनोगतम् । नितान्तं स्वाभाविकं च तत् ।

CC-0 Pulwama Collection. Digitzed by eGangotri

तथापि…तत् पूरयितुमेतावत्कालपर्यन्तं नाशक्नवम । न किमपि तत्र कारणम्… ऋते भीतेर्यन्मम जीवतेतिवृत्तं श्रुत्वा त्वं…कदाचित्…जुगुप्सया पराङ्मुखीभूत्वा मामतले नैराश्यगर्ते भ्रंशयेः इति । कोमलं निष्कपटं सहजविश्वासि तव हृदयं मम कठोरं कपटकुटिलं जीवनेतिवृत्तं ज्ञात्वा नूनं दूयेत । विरज्येच्च कदाचित् । तथा सति मम दुर्दैविनः कृते नावशिष्यैत किमप्यन्यच्छरणम्…ऋते मृत्योः । परन्तु-एतया भीत्या जुगुप्सित्वा तत् त्वां निष्कपटां जीवनसहचरीत्वेन वरितुमपि तु नोत्सहते मम मानसम् ।…अथवा, किमिति त्वां निरपराधां ममाधन्यस्य कारपादायासयेः ?…भवतु नाम यद्भावि । शृणु मम दुर्दैवनीमविश्वासबहुलां दुःखजडां जीवनगाथाम्' ।

उक्त्वा चैवं स आवेगघर्घरया मन्द्रया वाण्या तस्या पुरस्तादात्मनः जीवन-कथापटं सविस्तरमुद्घाटयितुमारभत ।

तस्य तदात्मनिवेदनं भावनाकुलाकुलं श्रोतुमिवाऽऽतपक्लान्ता वनश्रीरपि निरुद्धश्वासेव बभूव । सायंकाले स्वस्वनीडानि प्रत्यागच्छन् खगवृन्दोऽपि—विहाय सान्ध्यं कूजनं—निःशब्दतामेकान्तिकीमङ्गीचकार । संततप्रवाही स निर्झरोऽनि-च्छन्निव तस्य भावावेगमुत्कटमीषदपि प्रतिरोद्धुं— स्वं वेगं मन्दमिव चकार ।

अधोमुखः, क्षुद्र एकस्मिन् तृणपुष्प आबद्धशून्यदृष्टिः, पञ्चत्रिंशन्मात्र-वर्षीयमपि दुःखभारेणातिदीर्घमिव भासमानं स्वजीवनचित्रपटं क्रमशः स्मृतिचक्षुषा साक्षात्कुर्वन् विस्तृणंश्च तं मन्द्रया वाण्याऽभिन्नहृदयायाः प्रियायाः पुरस्तात् ‥ स… न परिलक्षयाञ्चकार तस्या मुखमण्डलं—श्रुत्वा तस्य मगधराजकुलसमुद्भवं विस्मितं, निशम्य तस्य निःस्नेहं बाल्यवृत्तान्तं सानुकम्पम्, आकर्ण्यानिच्छत एव तस्य विद्यापीठे शस्त्रशास्त्रनैपुण्याधिगमनं सकौतुकं, श्रुत्वा तस्य यौवराज्याभिषेकं सोल्लासं, निशम्य च तस्याङ्गदेशप्रशासनसाफल्यं नवीनरणयन्त्रपरिकल्पननैपुण्यं च सादरम्, आकर्ण्य तस्य पितुरौदासीन्यं साश्चर्यं, समाकर्ण्य कोशलराजपुत्रसंवाद-सारं सघृणं श्रुत्वा तस्य जनन्या हितोपदेशं समाश्वस्तं, विदित्वा तस्य सर्वथा प्रतिकूलाः प्रतिक्रियाः साश्चर्यम्, अवगम्य तस्य तं कालरात्रिप्रवासं कापालिक-सांमुख्यं च सभयरोमाञ्चं, विज्ञाय तस्य जननीप्रवञ्चनं कपटजालसीवनं च कलुषितं, श्रुत्वा तस्य पितृबन्दीकरणं पातकसहभागभावनयेव ग्रस्तं, निशम्य तस्य पित्रोः मुक्तिप्रयासं विफलं सकरुणम्, आकर्ण्य तयोर्वियोजितयोरन्नत्यागं साश्रु, अवगम्य तस्य सवत्र-राज्ये-भारत एव वा-प्रसृतं दुर्गन्धिनमपवादं समुद्विग्न, निशम्य तं रक्षाबन्धनवृत्तान्तं सकरुणम्, अनुमाय तस्य दुःखजडां निरुच्छ्वासतां संततां विह्वल, श्रुत्वा तस्य विमनस्कस्याऽऽविष्टस्येव केनचित् प्रवासं निबिडेऽरण्ये सभयम्, आकर्ण्य परिश्रान्तात् भ्रान्तनयनात् प्रभञ्जनात् तरयावःपतनं कस्यचि-च्छिलाखण्डस्योपरि सहसा मूर्च्छनं च विह्वलं… पल्लववितानान्तरालेषु दृश्यमानं सान्ध्यरागरञ्जिताभ्रपटलं गगनमिव प्रतिक्षण परिवर्तमानच्छटम् ।

'यदा चाहम्'-आह शुष्यन्मुखः सः, क्रमशो घनीभवति सान्ध्ये तिमिर

CC-0 Pulwama Collection. Digitzed by eGangotri

ईषल्लक्ष्यम्लानश्यामलमुखमुद्रो, 'जागरित इव निबिडायाःनिद्राया स्तस्या मूर्च्छाया अन्तस्तलादुन्मज्ज्य, ज्वरक्लान्तां दुःखश्रान्तामिमां दृष्टिमुदघाटयं तदा तवेदं, सुमुखि, गौरीगौरं सुनासं पक्ष्मलनयनमाननं, सद्यस्त्रोटितं सहस्रदलं सरसिजमिव किंचिन्म्लानं, स्वस्याऽऽननस्यैवोपरि किञ्चिदवनम्रमपश्यम् । अचिन्तयं चाऽऽत्मानं नूनं लोकान्तरं प्राप्तम् ।...(सविषण्णस्मितं) व्यस्मरं तु कटु सत्यं-यदेतादृशं पुण्यं न मया कदाचिदर्प्यर्जितम् ।...अस्तु तावत् ।...नातिचिरादेव मम सा भ्रान्तिर्व्यलीयत । न तु सा मनः शान्तिः, स आश्वासः, तत् समाधानं यन्मम मनसि त्वदवलोकनक्षणादेव-सौरभमिव कस्यापि दिव्यस्य कुसुमस्य-व्याप्तमासीत् । प्रत्युत-तस्य वृद्धस्य स्नेहशीलस्य भिषग्वर्यस्याज्ञातकुलशीलेऽपि मयि पुत्रनिर्विशेषं परं विश्वस्तस्य वत्सलस्य तातस्य-तव पितुः-प्रेमार्द्रेण वर्तनेन तद्वृद्धिमेवोत्तरोत्तरामाप ।...आजन्मनस्तृषितं मम हृदयं, पिपासितं मम मानसं, तव गृहे तृप्तिमप्रत्याशितामाकण्ठं निपीयाऽऽक्रन्दितुमिवाऽऽरभत-'इहैव...उष्यताम् । इहैव...उष्यताम्' इति । नित्यसन्त्रस्तो ममात्मा, तव समीप आश्वासं सहजमकल्पितोपनतं प्राप्य, उद्विजितुमारभतेतोऽन्यत्र गमनसम्भावनामात्रेण ।...अत एवाहं, शनैः शनैस्तीव्रतरीभवन्तीं तव जिज्ञासां-तव पितुश्च-विदन्नपि अविदन्निव, तव व्याकुलतामनुभवन्नप्यननुभवन्निव, व्यवहारम्...आशासानः 'अहमज्ञातकुलशील एवानेन परिवारेण कदाचित् स्वीकृतः स्याम्'-इति । (सनिःश्वासं) परन्तु वन्ध्यैव सा ममाऽऽशाऽऽसीत् ।...ब्रह्माऽप्यतीतात् स्वस्य मुक्तिमेवं नाप्नुयात् ।...किं पुनरहम् ? व्यपवर्तिष्ये शीघ्रमेव तत् स्थानं यन्नियत्या निर्दिष्टं मम कृते...हृदि कृतज्ञो गोपायन् तव मधुरमधुरां स्मृतिम् ।...हतजीवनेऽस्मिन्...अन्धकारबहुले...विद्युल्लतेव क्षणमात्रमुल्लस्य त्वं तदकाशेथाः स्त्रोल्लासेन-एतदेव ममाधन्यास्यहोभाग्यम् !'

वदंश्चैवं मन्द्रस्वरमधोमुखो वेदनाजडः नावेत् सावेगमुत्थितां तस्य संमुखे क्षितितलन्यस्तजानूपविष्टां तस्यावनम्रं-वृन्ताल्लूनमिव बृहत् कृष्णकमलं, मुखमुन्नमय्याऽऽर्द्राभ्यां कोमलाभ्यामुष्णाभ्यां करतलाभ्यां सास्रया दृष्ट्या ध्यायन्तीम्...आवेगस्फुरदोष्ठपुटाम् ।

विज्ञाय तु क्षणमात्रानन्तरं, भावनोद्वेगमुद्दामं सोढुमसमर्थो, विस्मयविस्फारितया नृत्यत्कनीनिकया दृष्ट्या एकाग्रया तस्या मुखं प्रतिध्यायन्, तस्या विलुलिते सुमनोवासिते मृदुले केशपाशे, निह्नुत्य स्वाननम्...अस्फुटमवदत्-'नाहं गन्तुमिच्छामीतः ।...नाहं गन्तुमिच्छामीतः ।' इति ।

निशम्य च तत्, भावाकुला प्रवहदश्रुधाराक्लिन्नकपोला, स्वस्कन्धे विश्रान्तं तस्य मस्तकं-जननीव व्याकुलस्य पुत्रस्य-आस्पृशन्ती, निःशब्दा, तथैव तस्थौ ।

विनिद्रस्य कस्यचित् खगस्य नीडनिलीनस्य व्याकुलं कूजितमाकर्ण्य चिरादिव प्रबुद्धा विचारतन्द्रायाः, सा, समन्ताद्विलोकयन्ती, परिलक्षयाञ्चकार सर्वतः प्रसृतं घनं नैशं तिमिरं, निबिडवृक्षराजिपल्लवान्तरालेभ्यः प्रवेष्टुं प्रयतमानमचिरोदितस्य रजनीनाथस्य रजतधवलं प्रकाशं च ।

CC-0 Pulwama Collection. Digitzed by eGangotri

बोधयित्वा च स्ववल्लभं स्वस्कन्धनिद्रितकल्पं शनैः शनैः, समुत्थिता, ज्ञातसर्ववृत्तान्तयेवानुच्छृंखलया सौदामिन्या गृहं प्रत्यावर्तत…तेन विचारमग्न-मिव प्रभञ्जनमारूढेन नितान्तशान्तस्वान्तेन प्रवृष्टघननिर्मलेन गगनेनेवानुगम्य-माना।

अपरेद्युश्च-प्रभात एव, समवलोक्य कार्यान्तरव्यापृतं स्ववल्लभं निराकुलं, सा कुलदेवतापूजनं परिसमाप्य पूजागृह एव देवतासंमुखं मृगचर्मणि समुपविश्य दुग्धपानप्रवृत्ताय प्रसन्नचित्ताय स्वजनकायातीतसायंकालिकं वृत्तं यथायोग्यं समग्रं निवेदयामास सद्यः स्नानार्द्रघनकेशपाशा सद्यःकृतपूजातिलकालंकृत-भ्रूमध्यां क्षितितलनिगडितदृष्टिः, संकोचमात्मनोऽपह्नोतुं प्राणपणेन प्रयतमाना, लज्जारक्ताभ्यां कपोलाभ्यां प्रकम्पमानेन स्वरेण च व्यर्थीकृताऽऽयासा। तस्याः पिता तु-उग्रदर्शनस्याप्यसामान्यप्रभावसम्पन्नस्य महाप्रमाणस्य स्वातिथेः कुल-शीलजीवनविषये चिरात् खलु कौतूहलान्वितोऽपि यथासमयं सर्वं प्रकटीभविष्यति' इति विश्वस्तः, शनैः शनैः प्रवर्धमानं स्वदुहितुः प्राणाधिकायास्तेन सह सौहार्दं निरीक्ष्य चिन्तितोऽपि, 'मम मङ्गलाऽतिक्रम्य लक्ष्मणरेखां कुलमर्यादायाः न किञ्चिदपि करिष्यति'-इति विश्वस्तः, तस्या एव मुखाद् विज्ञाय तं वृत्तान्तं चकितः सुदूरावस्थानात् नातिपरिचितोऽपि मगधदेशवृत्तान्तः कर्णोपकर्णिकया विदितापवादः, खिन्नः, प्रातिकूल्यमेवाऽऽदौ व्यानक् गम्भीरया मुखमुद्रया तस्य हस्ते तस्याः हस्तं जीवनसाहचर्यार्थं समर्पयितुम्।

अवलोक्य तस्य सहसोदासीनां चिन्तामग्नां मुखमुद्रां तिर्यक्दृष्टिक्षेपमात्रेण अनुमीय च तस्य प्रातिकूल्यं, तत्क्षणमेव विषण्णां, साभिनिवेशमिवातिथेर्विषये तस्य स्वाभाविकं चित्तौदार्यं विशालहृदयत्वं चोद्बोधयितुं प्रयतमानां, तत्कृता-पराधमार्जनस्य सुशक्यतां तदनुष्ठितपापप्रायश्चित्तस्य वाञ्छनीयतां च तैस्तैस्तर्कैः प्रतिपादयन्तीं, भावाकुलां तां विमनीकर्तुमसमर्थस्तु तां केनापि कार्यमिषेण ततोऽ-पसारयामास।

विरज्य च दुग्धपानात्, खिन्नः, कुलदेवताविग्रहमुखकमलनिबद्धदृष्टिरचि-न्तयत्-'अयं मितभाषी युवकस्तर्हि साक्षान्मगधेश्वरः।…आकृतिविशेषादकल्प-यमेवास्य महाकुलीनत्वम्। नतु मगधराजवंशीयत्वम्। कः खलूत्प्रेक्षेत-साक्षान्मग-धेश्वरः…एकाकी मलिनवेषः श्रान्तो गंभीरया शिरोरुजा मूर्च्छन्,…पतेत् अनाथ इव मगधदेशादेतावद्दूरे गहनेऽरण्ये, सूच्येत च तस्याश्वेनेहाऽऽगत्य स्वयमिति'? कलङ्कितश्चायं पितृविश्वासघातपातकेन।…कथमिवाहं, सांसारिकदृष्ट्या तद-पेक्षया साधारणोऽपि निष्कलङ्को महाकुलीनः प्राणेभ्योऽपि प्रियतरां दुहितर-मस्मै-बलाढ्यराज्याधीश्वरायापि एवं दूषितचरिताय-जीवनसाहचर्यार्थं समर्प-येयम्'?

CC-0 Pulwama Collection. Digitzed by eGangotri

'एवं कलंकितचरित्रस्य...... ।'

'किमस्य कलंकस्य परिमार्जनं, यथाऽऽह मङ्गला, न संभवि ?...संभव्येव । ...सानुशयोऽयं, पित्रोश्चरणेषु निक्षिप्याऽऽत्मानं, प्रक्षाल्य तानि अश्रुधाराभिर्जित्वा तयोः स्वभावकारुणिकयोः क्षमां, कलङ्कमिमं प्रमार्ष्टुं शक्नोत्येव ।... नूनमिमां सर्वमङ्गलां संभावनां मनसि कृत्वैव नयाऽस्येतिवृत्तं मह्यं निवेदितं स्यात् । कुशाग्रबुध्द्या ह्यनया—अन्यथा—वज्रदृढं मे प्रातिकूल्यमाशंकमानयाऽस्तैतत् वास्तविकं रूपं मम सकाशाद्गोपायितमेव स्यात्, एतदनुरक्तयाऽपि विवेकशीलयाऽप्रकटीकृतानुरागयैव चाऽयमितो व्यपवर्तितुं स्वं राज्यमनुमतः स्यात्—मूकवेदनयाऽपह्नुतभावनया यावज्जीवम् ।... अहो ! एतस्या भावाकुलमेतत्पक्षप्रतिपादनं नूनं व्यानक् अस्या दृढं संकल्पम् ।...सफला चेयं नूनं भविष्यति स्वे पुण्ये संकल्पे ।...नैसर्गिको खल्वस्यां कोऽपि विशेष... आ बाल्यादेवास्या मया तेषु तेषु प्रसङ्गेष्वनुभूतो, यद्वशादियमाग्रहशीलानामपि प्रतिकूलानामपि मनः शनैः शनैरनुकूलीकृत्य कृतानामपराधानां परिमार्जनाय तानुद्यतान् कर्तुं समर्थाऽभवत् ।... अयं त्वस्यामत्यन्तमनुरक्तः कथमिवास्या इमं शुभंकरं प्रभावमवधीरयेत् ?'

'तत् सफला भवतु नियतेरिच्छा ।...अहो ! स्मृतं मया । अनवलोकितमातृमुखाया अस्या भाग्यस्य विषये संदिहानेन मया, यवीयसीमिमां सुखं प्रसुप्तां स्वांके धारयता, स्वसुहृत् स ज्योतिर्वित् लक्ष्मीनारायण आपृष्ट आसीत् । तेन च सुचिरमधीत्य वत्साया जन्मपत्रिकां, तस्मिन्नेव समय आलिखितां, हृष्टेनाऽऽश्वस्तेन कथितमासीत्-'वत्सा मातृसुखमेकं वर्जयित्वाऽन्यानि सर्वाण्येव सुखान्याकंठमुपभोक्ष्यते यावज्जीवम् । पितुः सर्वस्वं पत्युः प्राणप्रियाऽपत्यसुखमुपभोक्ष्यते । तेनैव कथितमासीत्—स्वयं सुमतिरियमन्येभ्योऽपि सुमतिं प्रदास्यती'ति । अत एवास्या नामधेयं कृतं तन्मतमेवानुसरता 'मङ्गला' इति ।...तत् किम्—इममस्य कर्तव्यस्य विषये प्रबोधयेयं स्वयमपि—कन्याया दानात् प्राक् ?...नैतदुचितं स्यात् । इयं कठिना चिकित्सा वत्सैव, तस्या विशिष्टया पद्धत्यैव, समयमनुकूलं वीक्ष्यैव, सम्पादयितुं शक्ष्यति । अपरिपक्वायामवस्थायां चिकित्सितो महाव्याधिग्रस्त इव, अस्मिन् समये प्रबोधितोऽयं कदाचित् दुश्चिकित्स्यतरामवस्थां प्रतिपद्येत । तथा च सति—महान् अनर्थः स्यात् । तन्मन्ये—अजानतेवास्यापराधकलङ्कं, हृष्टमिवानाशङ्कितमिव निराकुलमिवाऽऽत्मानं प्रदर्शयता वत्साया हस्तः समर्पणीयो हस्तेऽस्य जीवनसाहचर्यार्थम्' ।

(निःश्वस्य) 'देवतास्तु सर्वथा स्वस्तिकरिष्यन्ति ।'

विचिन्त्यैवं प्रणम्य कुलदेवतां तच्चरणकमलपूजाकुंकुमं भाले कृत्वा समुत्थितः शान्तस्वान्तो दैनिककार्यचक्रे व्यापृतमिवाऽऽत्मानं प्रकटयन्, कतिपयदिवसानन्तरमेवैकस्मिन् सुप्रभाते निरीक्ष्य ग्रहस्थितिमनुकूलतमामजातशत्रुं सद्यः

CC-0 Pulwama Collection. Digitzed by eGangotri

स्नानं पूजागृहे सेवकमुखेनाऽऽह्वयत् । तर्कयित्वा प्रयोजनविशेषं तत्कालमेवाऽऽगतं किञ्चिदस्वस्थमानसं किञ्चित्प्रकम्पमानचित्तं तं देवतासंमुखमेवाऽऽसन एकस्मिन् समुपवेष्टुमकथयत् । स्नपयन्निव च तं स्नेहमय्या गभीरया दृष्ट्या, किञ्चिद्-भावाकुलः, कातरयैव वाण्या तस्मै स्वदुहितरं भार्यात्वायाऽर्पयामास'''निपुणं विजानन् पूजागृहाद् बहिः निःशब्दमागत्य परिहृत्य तयोर्दृक्पथमवस्थितां, सावधानां, तस्य वाणीममृतधारामिव कर्णचषकाभ्यामाकण्ठं पिबन्तीं ताम् ।

अजातशत्रुस्तु, स्वप्रियायाः समक्षं समुद्घाट्य स्वमतीतमनुभूय चात्मानं तया स्वीकृतं तथा निराकुलीभूतोऽपि तस्याः पितुः स्वाभिमानिनो महाकुलीनस्य मर्यादापालननिष्ठुरस्यानुमतेर्विषये किञ्चिदनाश्वस्तः, स्वप्रियायाः सान्निध्यलाभ-मात्रेणैव परितुष्टः, किञ्चिदप्यधिकतरं तस्मात् तस्मिन् समयेऽवाञ्छन्, सर्वथा-ऽप्रत्याशितं तं विवाहप्रस्तावं प्राप्य सहसा प्रहृष्टोऽपि कथञ्चिन्नियम्याऽऽत्मानं भावाकुलं, मन्द्रयाऽऽवेगास्पष्टया विनीतया वाण्या 'यथाऽऽज्ञापयन्ति तातचरणा' इत्यगदत्'''अधोमुखोऽज्ञ एव बहिरकस्मादुद्भूतस्य स्वर्णकङ्कणमञ्जुलनिःस्व-नस्य । अनुज्ञातश्च भाविना श्वशुरेण निरीक्ष्य तस्य संकोचं सस्मितेन पूजागृहा-न्निरगच्छत्'''उह्यमान इव कयाऽपि समुल्लासलहर्याऽदृश्यया प्रबलया ।

व्यतीयुश्चाऽऽन्तरालिकानि कतिपयानि दिनानि'''समासन्नदुहितृवियोग-दुःखभारजडस्यापि संकल्पितविवाहसंस्कारायोजनव्यग्रस्य प्रतिपलमसमय एव दिवंगतां जीवनसहचरीं साश्रु स्मरतो गृहस्वामिनः परंतपस्य, प्रियामेलनातुर-स्यापि कथंचिदधीरमिवाविचलितमिवाऽऽत्मानं प्रकटयतो मगधराजस्याजातशत्रोः, क्षणमात्रमपि वल्लभं स्वं दृक्पथाद्दूरीभूतं सोढुमसमर्थायाः स्वयं तु तस्य नयनमार्गं ईषदप्यनवतरन्त्या गूढं साक्षात्कृत्य व्याकुलतां स्मयमानमानसाया उल्लासपरवशाया अपि स्वकर्तव्यानि यथापूर्वं सधैर्यमनुतिष्ठन्त्या मङ्गलायाश्च''' अलक्षितप्रायाण्येव ।

प्रादुरासीच्च गृहस्वामिना परंतपेन सकातर्यं मगधराजेन साकाङ्क्षं तद्-वल्लभया ससाध्वसं तत्परिजनेन सोत्साहं प्रतीक्षितः परिणयदिवसः । आरुरोह च मन्दं मन्दं प्रवहता शीतलेनाऽऽम्रमञ्जरीपरिमलवाहिना समीरणेन पुरस्क्रिय-माणा, पूर्वदिगङ्गनापरिणीतेन नातिचण्डातपेन सहस्रकिरणेन सानुग्रहं स्पृश्य-माना, सा सर्वमङ्गला मङ्गला, मूर्तिमती तारुण्यसम्पदिव कमनीया, जनके-नाश्रुपूरितनयनेन प्रदत्ता, अग्निब्राह्मणसमक्षं, मगधराजधर्मपत्नीपदं, धर्मेऽर्थे कामे च यावज्जीवं तमनुगन्तुम् ।

तया च सहाननुभूतपूर्वा समुल्लासलक्ष्मीः मगधराजमानसम् ।

हर्षोल्लासभारभुग्नेष्वपि निमिषलघुषु कतिपयेषु दिवसेषु च, सा मगधराज-पत्नी, प्रवृष्टाऽऽषाढपयोधरा मेदिनीव पतिसुखोन्मीलितनवीनरामणीयका, आकण्ठं

CC-0 Pulwama Collection. Digitzed by eGangotri

सुखसागरे निमज्जन्त्यपि प्रतिपलं स्वं कठिनं कर्तव्यं स्मरन्ती, शनैः शनैः··· सहजमिव···अनुकूलमवसरमुपलभ्यैव पत्युः समीपे पितुर्गृहे ततः परं वस्तुमनिच्छां स्वस्य गृहाय प्रस्थातुमभिलाषां च व्यञ्जितुमारभत,···उत्तरोत्तरमभिनिवेष्टुमपि।

अजातशत्रुस्तूल्लासातिरेकविस्मृतस्वपरभावः, प्रत्युत तत्रैव जीवनं ततः परं यापयितुं समुत्सुकः, निशम्य तस्या अनुरोधमप्रत्याशितं विस्मितः आदौ तावन्न तं मनसि चकार। ततश्च तस्य निःसारत्वं तैस्तैस्तर्कैः प्रस्थापायितुमयतत सहासः।

परन्तु, यदा सा म्लानतरमुखारविन्दा तस्य नवोढा प्राणप्रिया वधूरेकस्मिन्निशामुखे शयनगृहे आवेष्ट्य तां सिंहकट्यामुन्नमय्य तस्याश्चिबुकं बिम्बफलाधरोष्ठं पातुं प्रवृत्तं तं साश्रुनयनारविन्दा तस्मिन् परकीये गेहे ततः परमन्नग्रहणस्याप्यनिच्छामस्फुटया वाण्याऽमूमुचत् तदा सः स्वभार्यायाः कुसुमकोमलहृदयायाः संकल्पदार्ढ्यं सम्यग्जानन्, अगतिकोऽनिच्छन्नप्यपरेद्युरेव, प्रभाते पूजागृहे शान्तमुपविष्टं पूजादीपकज्योतिः संलग्नदृष्टिं विचारमग्नं श्वशुरं समुपसृत्य विनयनम्रो भार्यया सह स्वं गृहं प्रतिनिर्वर्तितुं तस्यानुज्ञामयाचत।

गृहस्वाम्यपि, निभृतं समाश्वस्तोऽपि सर्वथोचितं चिरप्रतीक्षितं तस्यानुरोधं श्रुत्वा, चकितमिव, तद्वियोगमवश्यंभाविनमपि शीघ्रमेवमुपस्थितं साक्षात्कृत्य खिन्नमिवाऽऽत्मानं प्रकटयन्, प्रस्थानसङ्कल्पं किञ्चित्कालपर्यन्तं त्यक्तुमनुरुन्धान इव···अन्ते···महता कष्टेनानुज्ञामदात्।

अनुजग्राह चापरेद्युः प्रभात एव स्वगृहाय प्रस्थितौ चरणनतौ सास्रौ तौ मनःपूतैराशीर्वचनैः निःशब्दैः।

ददर्श च प्रभञ्जनं नृत्यच्चरणां सौदामिनीं शान्तां चाऽऽरुह्य गच्छन्तौ प्राकारमहाद्वारे मूर्तिरिव निश्चलः, नयनागतप्राणः, स्तम्भितबाष्पवृत्तिकलुषकण्ठः, मूकपरिजनाऽऽवृतः, एकाकी, स्मरन् दिवंगताया जीवनसहचर्याः।

CC-0 Pulwama Collection. Digitzed by eGangotri

## विंश: परिच्छेद:

मञ्जुला त्वाजन्मन: पितुरेव केवलान्निपीय वात्सल्यरसं प्रतिपच्चन्द्रकलेव वृद्धि मनोरमां याता पितुरेव केवलान्मातु: भ्रातु: भगिन्या: सख्याश्च सुखमनुभूय परमां तृप्ति गता, पितुरेव केवलस्य चरणारविन्दछायायामुपविश्य विविधानामार्यनार्युचितानां कलानां विद्यानां च पारं प्राप्ता, शनै: शनैरवतरता वार्धकेन पीड्यमानस्य तस्य तास्ता आवश्यकता: यौवनपदार्पणानन्तरं स्वयं पूरयन्ती, तैस्तैर्वार्धकसुलभै: रोगैराक्रान्तं जननीव स्वयमहोरात्रं प्रतिपलं परिचरन्ती, कृतककोपेनानुरोधेन हठेन वाऽपथ्यकरणात्तं रुग्णं स्वयं निवारयन्ती, तं तथैकाकिनं परित्यज्य पतिगृहं प्रस्थिता, वस्तुतो दु:खभारभुग्नाऽपि 'कदाचिन्मम वल्लभ आदित एवं स्वगृहं प्रतिनिर्वर्तितुमनिच्छुक, आदित एवात्रैवावस्थातुमुत्सुको, मम दु:खावेगं वीक्ष्य स्वसङ्कल्पाद्दुर्बलान्नूनं भ्रश्येद्' इत्याशंकया सुविचिंतितया नितान्तसंयमितस्वान्ता, प्रस्थान समये पितुश्चरणारविन्दवन्दनावसरे सास्राभ्यां विस्फारिताभ्यां तन्नयन-निगडिताभ्यां नयनाभ्यामेव कृतात्मनिवेदना, तस्माच्च तदभिप्रायविज्ञादाशीवचनपाथेयं जीवनपथपथ्यं प्रसादरूपेणलब्ध्वाकृतार्था, परस्परविमर्दि-भावनोल्लोल-कल्लोलक्षुभिमतानसाऽऽहृतस्मितप्रसन्नवदनकमला, जनकगृहात् प्रस्थिता, स्वीकुर्वती हृष्टानामपि साश्रुनेत्राणामाबाल्यात् परिचितानां ग्रामवासिनामुभयपार्श्वाऽऽबद्ध पङ्क्तीनां प्रणामान्···ग्रामसीमामतिचक्राम ।

प्रारभत च प्रवासं पतिगृहाय···क्वचित् हरितशाद्वलकोमलेन क्वचित्पाषाणमयेन, क्वचिन्निबिडवृक्षराजिमध्ययायिना क्वचिन्निर्वृक्षेण, क्वचिद्-विशालसरस्तीरस्पर्शिना क्वचिन्मरुस्थलप्रायेण, क्वचिद्ग्रामटिकामध्ययायिना क्वचिद सूर्यंपश्याऽऽटवीमध्यगामिना, क्वचिदागर्जद्वन्यप्राणिनिनादितेन क्वचिन्मञ्जुकूजत्पतत्रिकुलहृद्येन,···मार्गेण,···गृहपथमतीन्द्रिययेव कयाचिच्छक्त्या विजानता स्वामिनश्चित्तोल्लासेन स्वयमप्युल्लसितेन ह्रेषारव मुखरेण प्रभञ्जनेन समुपदिश्यमानमार्गां नवोढामिव विहायोच्छृंखलंस्वभावं कौमार्यसुलभं गाम्भीर्यं वर्तनस्याऽऽपन्नां सौदामिनीमारूढाम् ।

अचिरादेव पितृवियोगदु:खजडमपि तस्या हृदयं, स्वयं नात्युल्लसितस्यापि नवोढाया: स्ववल्लभाया सुगोपितामपि दु:खाकुलामवस्थामनुभूय तन्मनोविनोद-

CC-0 Pulwama Collection. Digitzed by eGangotri

नाय प्रयतमानस्य वल्लभस्य तास्ताश्चाटूक्तीस्तास्ताः मनोरमाः कथास्तास्ता भाविजीवनविषयिणीः भव्याः कल्पनाश्चाऽऽपिबत्, स्वाभाविकीमुल्लासमयीमवस्थामाससाद ।

तच्च साक्षात्कृत्यातीतस्मृतिघनघटामेदुरमपि तस्य मनः ।

सुलभोत्साहसम्पद्धि यौवनम् ।

न विविदतुश्चैवं परस्परं सुखयितुं प्रयतमानौ परस्परसमर्पितप्राणौ एकेन जीवात्मना धृतौ द्वौ विग्रहौ विडम्बयन्तौ—अवधीर्य तापं तिरस्कृत्य कष्टमविगणय्य परिश्रमं सततं प्रवसन्तौ तौ दीर्घमपि मार्गम् ।

प्रविविशतुश्चाचिरादिवापरेद्युः, निवेदयितुमिव पश्चिमदिगंगनां तां सुवार्तां मगधराजपत्न्याः पतिगृहप्रवेशस्यास्ताचलशिखरमवतरति भगवति भास्वति, श्रावयितुमिव निभृतं म्लानामेकाकिनीं मगधराजलक्ष्मीं तत्सखीसमाचारं मन्दं मन्दं वहति निशामुखसमीरणे, प्रकाशयितुमिव सर्वमङ्गलाया मगधराजपत्न्याः पुण्यसंकल्पाया गृहप्रवेशमार्गमुदयाचलशिखरमारोहति रजनीनाथे चतुर्दशकले, साक्षात्कर्तुमिव तां शोभनां घटनां गगनाङ्गणे प्रकटीभवति दिव्ययानगण इव नक्षत्रगणे मगधराज्यसीमाम् ।

प्रविश्य तु तां, प्रविष्टाविव पुनर्व्यावहारिके जगति सुलभापवादे नियमशृङ्खलिते, विहायोन्मुक्तं सोल्लासं व्यवहारं, परिज्ञाय स्वपदगौरवं, संनियमित व्यवहारौ, मितभाषिणौ निराकुलौ तथैव प्रवसन्तौ, मार्गपतितानां ग्रामटिकानां ग्रामाणां नगराणां प्रसुप्तप्रायाणां रक्षकैः राजपुरुषैः साक्षाद्राजानं चिरात् खल्वदृश्यतां गतमकस्मात्तथाऽलौकिकलावण्यविभूषितयाऽनवलोकितपूर्वयाऽप्यप्रत्याख्येयगौरवया ललनयाऽलङ्कृतपार्श्वं प्रवसन्तमवलोक्य क्षणमात्रं विस्मयमूढैरपरस्मिन्नेव क्षणे पर्यवस्थाप्य कथमप्यात्मानं प्रणतिनम्रैरभिवन्दितौ, सुखनिद्रामग्नायां राजधान्यां प्रविष्टौ, प्रसुप्तेनेव जनशून्येन प्रहरिनिभप्रासादततिनिबद्धोभयपार्श्वेन राजमार्गेण प्रापतुः महाद्वारं प्रासादस्य पूर्ववदेव सशस्त्रैः दक्षैः महाप्रमाणैः कवचाऽऽवृतकायैः भीषणदर्शनैः रक्षकैः रक्ष्यमाणं, पूर्ववदेव प्रज्वलदनेकालातप्रकाश्यमानं तथापि दीनमिवानाथमिव विगतश्रीव भासमानम् ।

अतिश्रान्तमपि गृहं प्रत्यागत्य प्रहृष्टं चिरपरिचितं कज्जलकृष्णं प्रभञ्जनमारूढं, श्यामतरवर्णमपि धूलिधूसरितमुखमुद्रमपि प्रसन्नं, सस्मितं, स्वामिनं तस्य पार्श्ववर्तिनीं, फेनिलमुखां विशालाभ्यामक्षिभ्यामितस्ततोऽवलोकयन्तीं वडवामारूढां, प्रत्रासम्लानामपि किञ्चिदप्यन्यूनीभूतरामणीयकां, सहजसंवेद्यगौरवां काञ्चित् रमणीं चावलोक्य निमिषमात्रमाश्चर्यस्तब्धैः निमिषान्तर एव प्रकृतिमापन्नैः रक्षकैः पुरतः ससंभ्रमं प्रधाव्य विधृताभ्यामश्वाभ्यामवतीर्णौ च तस्मिन्नेव समये प्रशान्ते वातावरणे प्रासाददेवतायतनात् सर्वत्र प्रसरन्तीभिः

CC-0 Pulwama Collection. Digitzed by eGangotri

श्रुतिसुखदाभि: भक्तिरसार्द्राभि: कुलदेवताप्रबोधनगीतलहरीभिरभिनंद्यमानाविव, सोत्साहं पुरत: प्रधावता संभ्रमवशाद्विस्मृतवेत्रेण वेत्रधारिणा समुपदिश्यमानमार्गौ, मातुश्चरणवन्दनार्थं तदन्त:पुरमुद्दिश्य चेलतुरातुरौ।

माता वैशाली तु, विनिद्रमेव यापितत्रियामा, यथाऽऽभ्यासं ब्राह्मे मुहूर्ते समुत्थाय विहितदैनिकक्रिया, स्नात्वा प्रासाददेवताऽऽयतनमहाद्वाराभिमुखं स्थित्वा प्रकम्पमानेन करुणेन स्वरेणोद्बोधनगीतं सहगायन्ती, ससंभ्रममागताया हर्षविकसितोन्निद्रनयनाया वृद्धाया दास्या मुखान्निशम्य पुत्रागमनस्य वार्तां-स्वप्नेऽप्यप्रत्याशितां-मनोरथानामपि विषयमतीतां-हर्षाऽऽवेगकम्पमानक्षीणदेहलता, पलमात्रं विस्मयजडा, विधूय जाड्यं, कुलदेवतां भक्तिविह्वलं प्रणम्योह्यमानेवोल्लासतरंगेणोल्लोलेनाऽऽकृष्यमाणेव वात्सल्यशृङ्खलया त्वरितयाऽऽवेगस्खलत्पदया गत्या प्रत्यागतमिव कालमुखात् प्रतिनिवृतमिवाज्ञेयगह्वरात् प्राणाधिकं पुत्रं स्वमक्षिविषयीकर्तुमग्रे ससार।

ददर्श च तथैव धीरगम्भीरया धरित्रीं नमयन्त्येव गत्याऽऽगच्छन्तं, तथैव महाप्रमाणं, तथैवोच्छूननाडीभीषणललाटफलकं, परन्तु कृशतरं श्यामलतरं··· सस्मितमुद्रं समाश्वस्तमिव तृप्तमिव प्राप्तप्राप्यमिव···स्वतनयं···जीवितमिव स्वं पुन: प्राप्तम्।

ददर्श च तेन सहैव धीरललितयागत्याऽऽगच्छन्तीं, तस्यापेक्षया ह्रस्वामपि तन्वीमपि नारीसामान्यापेक्षया महाप्रमाणाम्, 'आद्यामिव सृष्टिं धातु:, गौरीगौरीं, सौभाग्यकुंकुमतिलकविभूषितविशालभालप्रदेशां विकचनीलकमलनयनां सुनासां 'पक्वबिम्बाधरोष्ठीं,' स्मितप्रभोल्लासितमुखमुद्रां, सकौतूहलं तामेव ध्यायन्तीं, शान्तिमिव तृप्तिमिव मैत्रीमिव सर्वत्र विकिरन्तीं, कामपि युवतिम्।

यावच्च किमपि विनिश्चेतुं यतते···तावदपश्यत्तौ द्वावपि समीपमागत्य सादरं चरणयोर्निपतितौ।

क्षीणाभ्यामावेशप्रकम्पमानाभ्यां हस्ताभ्यामुत्थाप्य च स्वतनयं, नीचै: कृत्वा विकसितं सहस्त्रदलं कृष्णकमलमिव तस्याऽऽननं, पिबन्तीव तत् चिरपिपासिताभ्यां नयनाभ्यां, स्पृशन्ती तदश्रद्धानेव स्वे नयने कृशाभिरङ्गुलीभि:,···अन्यस्मिन्नेव क्षणेऽपारयन्ती तं वृषस्कन्धं कपाटवक्षसं स्वबाहुभ्यामाबन्धुमुच्छ्वसिते स्वे कृशे वक्षसि तस्यैव वज्रदृढे विशाले वक्ष:स्थले सावेगमलगत्।

आरभत च रोदितुं नि:शब्दम्।

चिरं प्ररुद्य, अभिवृष्य कादम्बिनीव, लघूभूतभारा, समनुभूय पुत्रस्य दृढं बाहुबन्धनं स्वस्य समन्तात् समुपजातविश्वासा, अनुभूय स्वमस्तकस्योपरि निपतत: कदुष्णान् तस्याश्रुबिन्दून् किञ्चिच्चकिता प्रवृद्धशोकावेगा चिरान्नु शशाक स्वात्मानं तस्माद्वियोजयितुम्···, अवलोकयितुं समीप एव तिष्ठन्त्या:, परमकरुणां

CC-0 Pulwama Collection. Digitzed by eGangotri

तन्मेलनमश्रुविलुलितया इशैकाग्रया पश्यन्त्या, आवेगप्रस्फुरदधरोष्ठायाः, रमण्या मुखकमलं एकवारं पुनः,…व्यापारयितुं स्वदृष्टिं कौतूहलपूर्णां स्वपुत्रस्यं नयनयोः …ज्ञातुं च वास्तविकीं स्थितिं वीक्ष्य तस्यलज्जावनते नयने ।

ज्ञात्वैव तु परं विस्मिता, परं हृष्टा, नितान्तमश्रद्दधानेवाऽऽत्मानं, परस्पर-विमर्दिभावनाऽऽलोडितमानसा, सहसाऽऽबबन्ध तत्सम्मुखीभूता लज्जारक्तवदन-कमलां तां व्रीडया भूमिमिव विशन्तीमधोदृष्टिं स्ववक्षसि । क्षणमात्रानन्तरं च—अशक्नुवानेव प्रतिरोद्धुं पिपासां स्वस्नुषायाश्चिरात् खलु प्रसन्नेन विधिना,सहसांऽके आरोपितायाः, रूपसंपदः, उन्नमय्य तच्चिबुकं तन्मुखसरोजमारक्ततरं चिरं निदध्यौ हर्षविस्फारिताभ्यां संभ्रान्ततारकाभ्यां समुद्भवदानन्दाश्रुपूरिताभ्यां लोचनाभ्याम् ।

चन्द्रिकामिव चन्द्रं विहायावतीर्णां, क्षमामिव क्षमारूपं विहाय रमणीरूपे-णाऽऽगतां, शुभाकांक्षामिव मागधजनसामान्यस्य विग्रहधारिणीं, सौम्यां सुदर्शनां सर्वमङ्गलां तां निरीक्ष्योद्यद्दिनकरप्रभेव काऽप्यनिर्णनीयाऽऽनन्दलहरी तस्या राजमातुः हृदय उदभूत् । अमान्तीव च विशालेऽपि तस्मिन्…राजपरिवारमनांसि राजगृहनागरिकचेतांसि मागधराज्यजनसामान्यहृदयानि च व्याप्तुमारभत ।

अचिरादेव च…किं राजपरिवारे किं राजगृहे किं मागधसाम्राज्ये… सर्व-त्रैव… तत्कौतूहलमात्रपरवशानि बालचित्तानि तद्रूपसंपत्प्रशंसामात्रव्यग्राणि नारीजनमुखानि तद्गुणचर्चामात्रमुखराणि सामान्यजनमुखानि च बभूवुः ।

मगधराजपत्नी मङ्गलाप्यनभ्यस्ताऽपि राजकुलाचारस्यापरिचिताऽपि मगधराजपरिवारस्य,… सादरेणापि स्निग्धेन व्यवहारेण श्वश्र्वाः राजमातुर्वै-शाल्याः क्षेमायाश्च प्रेममयेनाऽऽचरणेन श्वशुर्ययोः हल्लवेहल्लयोः नियमकठोरेणापि मृदुना व्यवहारेण राजपरिवारसेवकजनस्य चेतस्तथा वशीचकार यथा सर्वेऽपि ते विस्मृत्याचिरादेवातीतं दुःखभारभुग्नं महता समाधानेन स्वं स्वं जीवनं यापयितु-मारेभिरे ।

विशेषतो राजमाता वैशाली । तस्या हि अभागिन्या हृदयम्—आ पतिगृहम्-प्रवेशात् पतिप्रेम्णः निरतिशयात् आ पुत्रजन्मनो मातृसुखान्निर्बाधाच्च वञ्चितं क्रूरया नियत्या—चिरपिपासितं स्नेहस्य निरपवादस्य—प्राप्य तां स्नुषां सर्वमङ्-गलां दुहितरमिव प्रेममयीं तृप्तं, संजाताऽऽश्वासं, निगूढमाशंसितुं नूनमारभत—'कदाचिदियं मम कल्याणी स्नुषा…श्रान्ते इमे मे वृद्धे नयने…चिरनिद्रायाः प्राक्… अदर्शनं परं गतस्य मम भर्तुः दर्शनेन कृतार्थेऽपि कुर्याद्…' इति ।

तस्याः स्नुषाऽपि… परमचतुरा… पत्युः प्रेमसुखसागर आकण्ठनिमज्जन-सुखमनुभवंत्यपि तस्य चित्तवृत्तीः परमचञ्चला अनुसरन्त्यपि सर्वदा प्रकटतोऽ-प्रकाशयंत्यात्मानं तथा, छायां प्रकाशमिवोषसं सहस्रकरमिव तामेव प्रतिपलमनु-

CC-0 Pulwama Collection. Digitzed by eGangotri

सर्तुमिच्छुकं तमुपदेशेन कान्तासंमितेन-सहजमिव-राज्यप्रशासनकर्मणि योजयन्ती, विविधरणयन्त्रपरिकल्पनानैपुण्यं तस्य विस्फारितनेत्रं बहु बहु मानयन्ती, शनैः शनैः,—यदृच्छयेव तस्य समक्षं श्वशुरस्य बिम्बसारस्य ज्येष्ठायाः श्वश्र्वाः कोशलदेव्याश्च चरणकमलविवंदिषां सूचयितुमारभत ।

अनुभूय तु तस्य तत्क्षणपर्यन्तं निराकुलस्यापि सुरतकेलिसमुत्सुकस्यापि प्रहृष्टस्यापि स्निह्यच्चित्तस्यापि सहसोद्वेल्लितामाकुलतामुदासीनतां खिन्नतां कठोरतां, साक्षात्कृत्य तस्योच्छूनीभवन्तीं भालपट्टनाडीं, दृष्ट्वा तस्य तन्मुखारविन्दभ्रमरायमाणां स्निग्धां दृष्टिं कलुषितामन्यत्र च, व्यावृत्तां,··· झटिति··· तस्य चित्तमन्यत्र प्रायुनक्—नात्युत्सुकेव श्वशुरदर्शनस्य ।

गूढं भीता च तस्य प्रसुप्तस्येव ज्वालामुखस्य, सुलभस्फोटात् स्वभावात् अनुत्सुका तीव्रं कमप्युपायं प्रयोक्तुं दुष्परिणामाऽऽशंकया,··· तं पुनः प्रकृतिमापन्नं पूर्ववन्निराकुलं पूर्ववत् प्रसन्नं तया सह क्रीडन्तं स्मयमानमनुभूयैवाऽऽश्वसत् ।

अप्राप्तमेव च समयं नियतिनिर्द्धारितं विभावयन्ती, किञ्चिद्विषण्णाऽपि शीघ्रमेव स्वां प्रकृतिं सहजप्रसन्नामापन्ना, स्वानुकूलमवसरं प्रत्यपालयत् क्षणमात्रमप्यपरित्यक्तसङ्कल्पा—भिषगिव गूढरोगाक्रान्तं हठिनं रुग्णं चिकित्सिषुः ।

CC-0 Pulwama Collection. Digitzed by eGangotri

## एकविंशः परिच्छेदः

'घण्…घण्…घण्…घण्…' इत्यस्फुटं श्रुतिपथमवतरद्भिः, अध्यारुह्य निशान्तसमीरलहरीः लोकान्तरादिवाऽऽगच्छद्भिः, दिगंतादिव समापतद्भिः प्रहरिप्रहतघण्टानिनादैः सहसा प्रबोधिता मगधराजपत्नी तन्द्रालसाऽऽत्मानं पर्यवस्थापयितुमपारयन्ती क्षणमात्रं व्यस्मयत—'कीदृशोऽयं निनादः ?…नूनं चञ्चलेन तेन प्रहतानां कांस्यभाण्डानाम् !…अतीव चंचलो…दण्डमेवार्हति।…परन्तु तस्य मातामहः…तं प्राणाधिकं मन्वानः…दण्डात् सदैव तं रक्षति।…अत एव-सः…।…परन्तु…कुत्र तौ द्वावपि ?…कीदृशीयं स्तब्धता ?' इति॥

बलाच्च निद्राजडे नयने उन्मील्य दृष्टिमितस्ततोऽक्षिपत्। अपश्यच्च प्रातः—सन्ध्याप्रकाश ईषद्दृश्यं महार्हे पर्यंके स्वपार्श्व एव सुखं सुप्तं भर्तारम्।

अश्रद्दधाना चाऽऽत्मानं, विस्मयमाना, बाहुलतां केतकीगौरीमीषद्रणत्-रत्नकङ्कणां प्रसार्य तं घनरोमणि वक्षःकपाटेऽस्पृशत्। विगतसंदेहा च, प्रसन्नमुखमुद्रं तमेवावलोकयन्ती, तद्वृषस्कन्धन्यस्तकोमलकरतलाऽचिन्तयत्—'सः…स्वप्न एवाऽऽसीत्।…मया खलु…निशीथेऽतीते…निद्रावशं यातेऽस्मिन्…उन्निद्रयाऽऽसंवत्सरादनवलोकितस्य पितुर्वृद्धस्यैकाकिनः स्मरन्त्या…स नूनं स्वप्ने दृष्टः।…एवमेतत्।…परन्तु…(सतृष्णं)…तर्हि सः प्रकृतिचञ्चलः…अस्यैव प्रतिकृतिर्वयोयसो…बालकः…सः…(सलज्जं) कः खल्वासीत् सः ?'

विचिन्तयन्ती चैवं स्वभर्तुः विशाले वक्षसि लज्जारक्तं मुखकमलं स्वं गूहितुमचेष्टत। अयतत च, तस्याश्चेष्टयाऽर्द्धजागरितेन स्मयमानेन भर्त्रा मीलितलोचनेनैवोद्भ्रूणा सस्नेहं परामृश्यमाना विलुलितकोमलालकपाशे मस्तके, पुनरपि स्वप्तुम्। न तु शशाक…विचित्रया कयाचित् पिपासया विचलिता।

अपारयन्ती चात्मानं नियंतुं, परिकल्प्य भर्तारं पुनः प्रसुप्तं, शनैः शनैः शयनादुदतिष्ठत्। परिचुम्ब्य च तन्नयने निद्रामुद्रिते, निर्गत्य निःशब्दं शयनगृहात्, उदितप्रायं भगवन्तं सहस्रकिरणं प्रणम्य, यथाभ्यासं दैनिकक्रियाकलापे स्वात्मानं निमज्जयितुं प्रायतत।

परन्तु-तस्या मानसं नारमत क्षणमपि व्यर्थं इव निःसार इव तस्मिन्…स्मरत् तमेव स्वप्नदृष्टं बालकम्। प्रतिफलदिव तस्या इमां मानसिकीमवस्थां…

CC-0 Pulwama Collection. Digitzed by eGangotri

तस्याः शरीरमपि तस्मिन् सुप्रभात आलस्यमिवान्वभवत् । नाकामयत किमपि जक्षितुं पातुं वा । अवमचत्र कदुष्णं कश्मीरजसुगन्धि मधुरं पयः ··परिजनाऽऽग्रहेण बलात् पीतम् ।

विस्मिताऽनेनाऽस्वास्थ्येनाननुभूतचरेण··सा··कथञ्चित् स्नात्वा··श्रान्ता क्लान्ता व्यश्राम्यत्··स्वीकृत्य प्रहृष्टाया इव विदन्तं हसन्त्या वृद्धाया दास्याः साग्रहमनुरोधम्··अनवबद्धघनकेशपाशैव ।

सा तु तस्याः श्रान्तिः··क्लान्तिः निमिषमात्रे लोपमात्यन्तिकमगच्छत् शीघ्रमेव तयैव वृद्धया दास्योपदिश्यमानमार्गायास्त्वरितया गत्या स्वयमागताया आगत्य च समाश्लिष्य तां सादरं ससंभ्रमं चोत्थितां भूरिभिर्गद्‌गदैराशीर्वचनैः बहु बहु मानयन्त्याः श्वश्र्वा वैशालीदेव्या मुखान्नवीनस्य मगधराजवंशांकुरस्योद्‌गमनवार्त्तां सुधासमां निपीय कर्णाभ्याम् ।

उदगमच्च-तत्स्थानेऽननुभूतचरा मातृहृदयमात्रसंवेद्या काऽप्यनुभूतिर्यद्‌वशात् सा··भर्तुः कौतुकोत्फुल्ललोचनस्यान्तर्गृहीतमुक्तामणिं शुक्तिमिव तां बहु मानयतस्तस्या इच्छासङ्केतमपि पूरयितुं संनद्धस्याधिकतरप्रवृद्धप्राणशक्तेरिव महत्तरेणोत्साहेन प्रशासनकर्मण्यात्मानं योजयतोऽहोरात्रं प्रतिपलं तस्या एव चिन्तयतः नित्यप्रसन्नस्य सदास्मयमानस्य क्षीणतरक्रोधोद्रेकस्य समक्षं कदाचिन्मानिनीव मानं कुर्वती, कदाचिन्मातेव सहनशक्तिमपारां प्रदर्शयन्ती, कदाचिन्नवोढेव लज्जाधोमुखी, कदाचित् प्रौढेव प्रगल्भा, कदाचित् 'प्रतिपच्चन्द्रस्येव' प्रतिक्षणं प्रवर्धमानस्य तनयस्यैव विषये रहसि तेन सह मनोरथान् विविधान् कुर्वती, कदाचिदन्तर्वर्त्नीसुखशयने शयाना निमीलितनयना एकान्ते स्वतनये तत्पितुः शौर्यं निर्भीकत्वं निष्पक्षपातित्वं स्वाभिमानित्वं दाशरथेः रामस्य मर्यादापालकत्वं भरतस्य प्रजापालननैपुण्यं श्रवणस्य पितृभक्तिशालित्वं संकल्पयन्ती एकाग्रेण चित्तेन···श्वश्र्वा वैशालीदेव्या अवधीर्यन्यत् कार्यजातं सदा तस्या आसमन्तादेव व्यवहरन्त्या जननीनिर्विशेषेण वात्सल्येन तस्या आहारादिकं स्वयं निरीक्षमाणाया अविश्वमत्या इवानुभववृद्धे परमदक्षे कुशले राजवैद्ये स्वयमपि तानि तान्यौषधानि गर्भपुष्टिप्रदानि गर्भिणीस्वास्थ्यकारीणि सूचयन्त्याः समक्षं कदाचित् पतिगृहात् सद्य आगता दुहितेव हठं कुर्वती, कदाचित् तत्स्नेहभारनम्रमिवाऽऽत्मानमनुभवन्ती, सदा तदुपदेशमनुसरन्ती, हल्लवेहल्लाभ्यां शस्त्रशास्त्राभ्यासात् प्राप्य कथञ्चिदवसरं तत्समीप आगताभ्यां कौतुकान्विताभ्यां सह तास्ताः कथाः कुर्वती सेवायामुपतिष्ठतां देशविदेशाऽऽगतानां विनम्राणां वणिजां सकाशात् बालराजोचितानि विविधानि रत्नमण्डनानि यवीयांसि सौवर्णानि महार्हाणि रम्यवर्णानि कौशेय वस्त्राणि बालमनोहारीणि क्रीडनानि विचित्राणि सोत्साहायाः श्वश्र्वाः परमविदग्धयोः हल्लवेहल्लयोश्च सहमत्या क्रीणती, कदाचित् समवयस्काभिः सखीभिः सह प्रासादाऽऽरामे विकचशिरीषकुसुमाऽऽमोदवासिते विकसिताऽऽम्र

CC-0 Pulwama Collection. Digitzed by eGangotri

मञ्जरीभ्रमद्भ्रमरगुञ्जारवमुखरिते सायंप्रकाशमनोहारिणि वनभोजनकौतुकं मानयन्ती,कदाचिन्मन्दनैशसमीरवीज्यमानोत्फुल्लकुमुदधवलस्य प्रतिबिम्बितनिशाकरबिम्बस्य प्रासादक्रीडासरोवरस्य हरिद्दूर्वाङ्कुरकोमले तीरे सुखं निषण्णा वल्लभेन सह वीणावादनं श्रुतिमधुरं शृण्वती,···प्रतीक्षाकालमलक्षितायन्मासमेव यापयितुमारभत।

एकदा तु-प्रहरमात्रावशेषे निदाघान्तप्रचण्डभास्करतापदुःसहे दिने, प्रवृद्धगर्भभाराऽऽलसा, प्रयतमानास्वपि चिन्तातुरासु परिचारिकास्वविलीयमानचित्तौदासीन्या, निष्कारणमेव व्यग्रमिव व्याकुलमिव समुत्तेजितमिवाऽऽत्मानं प्रतिपलमनुभवन्ती, क्षणमात्रमपि गृहाऽऽभ्यन्तरे स्थातुमपारयन्तमिवाऽऽत्मानं कलयन्ती··· निरचिनोदकस्मात् गन्तुं दर्शनार्थं कस्याश्चित् देवताया अप्रसिद्धायाः परिजनेभ्यः कर्णोपकर्णिकया श्रुतप्रभावाया राजगृहान्नातिदूर एवैकस्यां ग्रामटिकायां स्थितायाः। तत्क्षणमेव चाऽऽदिशत् प्रधानवेत्रधारिणीं रथं समुपस्थापयितुम्। तया तु समाकर्ण्य तं सर्वथाऽप्रत्याशितमादेशं विस्मिताऽपि दिवसावसानकाले विजनप्रवासात्तस्मात् तां निवारयितुमिच्छन्त्याऽपि तस्या दोहदमवमानयितुमधृष्णुवत्या क्षणं विचार्य तदाज्ञापालनसमकालमेव विज्ञप्ता राजमाता चकिताऽनामिकया दुश्चिन्तयेव कयाचिद्ग्रस्ता प्राणेभ्योऽपि प्रियतरया स्नुषया सह स्वयमपि तस्मिन् विजने देवतायतने गन्तुमुद्यताऽभवत्। विमनस्कया मूकया च तया सह, आरुह्य सत्वरमेव सेवायामुपस्थापितं सुखदगतिं रथं, प्रासादान्निरगात् द्वाभ्यामश्वारोहिभ्यामुपदिश्यमानमार्गा द्वाभ्यां चानुगम्यमाना तीक्ष्णभल्लहस्ताभ्यां महाप्रमाणाभ्याम्।

आक्रम्य च राजधान्या बहिर्यायिनं विविधव्यवसायव्यग्रैर्नागरिकैराकुलाकुलं नातिदीर्घं मार्गं शीघ्रमेव—अपारयतीव भाविनीं घटनामवलोकयितुं ससंभ्रमं पश्चिमाम्बुनिधौ निमज्जति भगवति भास्वति, जुगुप्सितुमिव भाविनीमशुभां घटनां वेगेनाऽऽक्रमति दशदिशः नैशेऽन्धकारेऽनुत्सुकेष्विव साक्षीभवितुं भाविन्या घटनाया अनुपतिष्ठत्सु गगनाङ्गणे नक्षत्रेषु, भीत्येव स्तब्धतामुपयाते सदावाहिनि,—कुपथेन विजनेन प्राप तद्देवतायतनमतिप्राचीनं खण्डितप्रायं विरूढविविधलताऽऽच्छन्नभित्तिकं विद्युत्पातविनष्टकलशं विकेतु सद्यः प्रबुद्धघूकघूत्कारनिनादितसभामण्डपम्।

अवलोक्य च तत्—अनामिकभयाऽऽक्रान्ता दुःशङ्काऽऽतुरा सा यावद्रथादवतरन्तीं षाण्मासिकगर्भभारालसां सूक्ष्मस्वेदबिन्दुदूषितभालप्रदेशां कष्टेनेव दीर्घदीर्घतरं श्वसन्तीं स्वस्नुषां पुरतो गमनान्निवारयति···तावत् साऽवशेव मन्त्रमोहितेव केनचित् पापिनाऽऽकृष्यमाणेव विस्फारितलोचना किञ्चिद्विवृतमुखा विनष्टप्रायां सोपानततिमारुह्य भारजडान्यस्थिराणि पदानि निक्षेप्तुमप्यारभत।

राजमाताऽपि, परित्यज्य तन्निवारणसङ्कल्पं, वेपमानाऽपि तदनुसरणा-

CC-0 Pulwama Collection. Digitzed by eGangotri

कृतदृढनिश्चया, महता धैर्येण तां निःशब्दमनुससार...एकाकिनी। अवलोकयामास च क्षीणालातप्रकाशिताभ्यन्तरे नातिविशाले नात्युन्नते कुगन्धिनि तस्मिन् गर्भगृहे पाषाणखण्डरूपिणीमनतिस्पष्टविग्रहां सिन्दूरर्चचितां कर्णिकारमालाविभूषितां सद्योबलीकृतपशुमुण्डकृतनैवेद्यां भीषणनेत्रां कामपि ग्रामदेवतामूर्तिम्।

क्षणमात्रं च विलुप्तस्थलकालव्यक्तिविवेका विस्मयजडा भीतिपरवशा मूर्तिवत्तस्थौ तन्निगडितदृष्टिः। अपरस्मिन्नेव तु क्षणे, हठान्निवार्य तं प्रभावं, बलादुत्सार्य विस्मयजाड्यं, कथञ्चित् पर्यवस्थाप्याऽऽत्मानं, स्मृत्वा कुलदेवतामनिष्टनिवारिकां यावत् स्वस्नुषां ततस्तत्क्षणमेव निर्गमयितुं चेष्टते तावदवलोकयामास तां गर्भगृहकोण एकस्मिन्निश्चलमुपविष्टं तिमिरबाहुल्यवशादनवलोकितपूर्वमेकं वृद्धं कृशतनुमप्यप्रत्याख्येयशक्तिविशेषं प्रवृद्धधवलश्मश्रुजालदुर्लक्ष्यविशेषमुखमुद्रमपि सुलक्ष्यरक्तनयनं प्रत्यग्रसिन्दूरकृतरेखाभीषणभ्रूमध्यं ह्रस्वकायं कृष्णवर्णं कुत्सितं स्मयमानं दन्तुरं तन्मात्रनिबद्धसाभिप्रायतीक्ष्णदृष्टि कमपि कापालिकं चकिताभ्यां विस्फारिताभ्यां किंचित् स्मर्तुमिव प्रयतमानाभ्यां नयनाभ्यामवलोकयन्तीं, कतिपयक्षणानन्तरमकस्मात् परिज्ञायेव तस्य यथार्थं स्वरूपं सावधानाभ्यां नेत्राभ्यां तं पुनः पश्यन्तीं, सहसा जुगुप्साकलुषितमुखमुद्रां, विधूयेव तस्य संमोहनप्रभावं हठाद्विदीर्येव दृङ्मात्रसाहाय्येन तेन निःशब्दं सीयमानं सूक्ष्मं मोहजालं मनोबलेनाजय्येन, ततः परावृत्य मुखं, कथञ्चित् प्रणम्य तां ग्रामदेवतां ततो धीरया गत्या निर्गच्छन्तीम्।

अनुससार च तां सर्वथाऽनभिज्ञा वस्तुस्थितेः।

मगधराजपत्नी त्ववलोक्यैव तं पापिनं कापालिकं सहसा स्मारिता स्ववल्लभेन तस्यां सायं सन्ध्यायां तस्मिन् विजने वने तथा निवेदितस्य लोमहर्षकस्य वृत्तान्तस्य, प्रत्यभिज्ञाय तं स्वपतिसम्मोहनकर्तारं भयघृणाविस्मयादिविविधभावनाऽऽलोडितमानसा, क्षणमात्रं विलुप्तधैर्या, क्षणमात्रं दुर्बलमिवासाहाय्यमिवाऽऽत्मानमनुभवन्ती, अन्यस्मिन्नेव क्षणे परिज्ञायाऽऽत्मानं तत्पापप्रभाववशीभवन्तं समुत्तार्याऽऽत्मानं महता प्रयत्नेन तत्संमोहनसागरात् तिरस्कृत्य तस्य दुष्टमामन्त्रणं दृढीकृत्य स्वस्य स्वभर्तुः स्वतनयस्य च रक्षणनिश्चयं देवतायतनान्निर्गता, श्वश्र्वा मूकयाऽनुगम्यमाना, रथमारुह्य राजधानीं न्यवर्तत—देवतायतनाद्बहिरेव स्थितै राभ्यन्तरिकरोमहर्षकवृत्तान्तानभिज्ञै रङ्गरक्षकैरनुगम्यमाना।

उपेत्य च राजप्रासादं, श्वश्र्वा दत्तहस्तावलम्बाऽधोऽवतीर्य रथादनभिज्ञैव महाद्वाररक्षकसैनिकानां प्रणतानां, गर्भभारजडयाऽप्यावेगसत्वरया गत्या प्रासादपरिसरवर्तिनः सायंदीपमालाऽऽलोकितस्य नक्षत्रैरिवासंख्यैर्भक्तिवशाद्गगनाङ्गणादध आगत्य मण्डितस्य राजकुलदेवतायतनस्याभिमुखीबभूव।

क्षालितचरणकमला प्रविश्य च तस्मिन्, निवातस्थिरघृतमहादीपप्रभाऽऽलोकितविग्रहायाः प्रत्यग्रसायंपूजाकुसुममालाविभूषितायाश्चद्वेल्लद्धूपलहरी-

CC-0 Pulwama Collection. Digitzed by eGangotri

परिवेष्ट्यमानमूर्त्याः कुलदेवतायाश्चरणकमलयोर्निषण्णा,—समवलोक्य तस्या उद्विग्नां मनोऽवस्थां चकितेषु भीतेषु ततः निःशब्दमपसृतेषु पूजाधिकृतेषु द्विजेष्वन्येषु च राजपरिवारजनेषु,—पार्श्वोपविष्टश्वश्रूमात्रद्वितीया दीनेवानाथेव निःसाहाय्येव करुणया मूकयैवाऽऽक्रोशपूर्णया वाण्या भगवत्या अनुग्रहं सर्वानिष्टनिवारणसमर्थमयाचत—

'देवि ! अशरणशरण्ये !...त्वमेव, मातः, पातुं प्रभवसि तव दासीमिमाम् ! ...सर्वविनाशिनी सा पापछाया, या खलु ग्रसित्वा मम भर्तुः सदसद्विवेकिनीं बुद्धिं तेन तादृशमुभयलोकविरुद्धं पापकर्म कारयाञ्चकार...सा सर्वविनाशिनी पापछाया तव दासीमिमां मगधराजकुलप्रदीपज्योतिः नवीनं सर्वकल्याणाय स्वाभ्यन्तरे गोपायन्तीं प्रसह्याऽऽक्रमितुं प्रयतते !...त्वमेव, मातः, पातुं प्रभवसि माम्। अहं हि...अद्यापि...व्यतीतेऽपि पूर्णे संवत्सरे...स्वभर्तारं तत्कारितात् पापपङ्कात् समुद्धर्तुमद्यापि न प्राभवम् !...साऽहं दुर्बला कथं पुनराक्रमणप्रचण्डां पापशक्तिं पराजेतुं शक्नुयाम् ?...कथं च स्ववल्लभं पापकेतुग्रसनान्मोचयितुम् ?... अतः...पाहि मां, मातः ! पाहि माम्।'

याचमाना चैवं निःशब्दमश्रुपूर्णाभ्यां करुणाभ्यां म्लानाभ्यां नयनाभ्यां सहसाऽन्वभवत् दिव्यमिव किमपि लोकविलक्षणं ज्योतिः निःसरद्भगवत्याः प्रशान्ताभ्यां प्रसन्नाभ्यां नेत्राभ्यां प्रविशच्च तस्या अभ्यन्तरम्। अन्वभवच्च सर्वां तां व्याकुलतां व्यग्रतामुत्तेजनां दुर्बलतां भीतिं सहसा विलीयमानां समुदीयमानां च तत्स्थानेऽननुभूतपूर्वां प्रगाढां शान्तिं धृतिं चागाधाम्।

प्रवृष्टजलधरा प्रशान्तदावानला वनमेदिनीव तृप्तिं परमामुपेता, हर्षाश्रुपूरितनयनकमला, निरापदमात्मानमात्मनः पुत्रकं चोत्प्रेक्षमाणा, ऽवश्यंभाविनं पतिपापकलंकविलयं मन्यमाना, भगवतीचरणारविन्दयोः प्रणता, चिरादिवोत्थायाऽऽचम्य परमया श्रद्धया तच्चरणप्रक्षालनंजलामृतं धीरगम्भीरया गत्याऽन्तःपुरं प्रत्यावर्तत विश्रामार्थं—प्रकृतिमापन्नां स्वस्नुषां समवलोक्य प्रत्यागतप्राणेव श्वश्रूवा श्रान्तया छाययेवानुगम्यमाना।

विधाय च किञ्चित् क्षुधोपशमनं, मन्दनिशीथप्रदीपाऽऽलोकिते विकसितपुष्पगुच्छाऽमोदभरिते शयनगृहे सुखशयने विश्रान्ता, आपृच्छ्य स्नेहसिक्तया वाण्या गतायां स्वकक्षान् श्वश्र्वामेकाकिनी, निर्भया, दैनिकं प्रशासनकार्यभारं समाप्य तस्याः संनिधौ प्रहरमात्रं सुखमुपवेष्टुमागच्छन्तं प्राणवल्लभं प्रतीक्षाञ्चक्रे—'निवेदनीयो न वा सायंकालिकः स वृत्तान्तस्तस्मै'—विवदन्तीत्थमात्मना सह।

तच्च तस्या दोलायमानं चित्तं, समवलोक्य प्रहरमात्रक्षीणायां निशीथिन्यां तथैव नमयंत्येव धरित्रीं गत्याऽऽगच्छन्तं प्रसन्नवदनमागमनक्षण एव

CC-0 Pulwama Collection. Digitzed by eGangotri

सस्मितं कुशलं युवराजमातुरापृच्छन्तं स्वपतिं सहसा निश्चिकाय—'आत्ममात्र-विदितोऽयमात्ममात्रवेद्यो रक्षणीयः ।···नास्मै निवेदनीय' इति ।

संजुगुप्स्य च स्वमनोभिप्रायं महता चातुर्येण, समाकर्ण्य तां पृच्छां लज्जित-मिवावलोक्य तमकस्मादागतं ससाध्वसमिवाऽऽत्मानं प्रदर्शयन्ती, ससंभ्रममिव पर्यवस्थापयन्ती स्कन्धदेशादधः प्रभ्रष्टं समुज्ज्वलवर्णमुत्तरीयं गर्भभारजडां शय्यायामलसमलसं प्रसृतां कमनीयां स्वदेहलतां च···तं पर्यङ्के स्वसमीप एव महताऽनुरोधेन समुपावेशयत् ।

तद्वक्षसि विश्रान्ता, तत्कण्ठहारेण खेलन्ती, अन्वरञ्जयत् तस्य चित्तं संलापेन स्वैरेण विविधमनोरथहृद्येन ।

शनैः शनैश्च···प्रस्फुरद्गर्भभरालसा, परिश्रमक्लान्ता, शृण्वती चाटु-वचनानि प्रियंवदस्य प्राणवल्लभस्य, तदंके विश्रब्धं विलीना, निद्रावश्यतामयात् ।

CC-0 Pulwama Collection. Digitzed by eGangotri

## द्वाविंशः परिच्छेदः

अवशिष्टाश्च मासा…भगवत्याः कुलदेवतायाश्चरणच्छायायां विश्रान्तमात्मानमकुतोभयं विश्वसत्याः, श्रूयमाणपदन्यासस्य तनयस्यैव विषयेऽहर्निशं चिन्तयन्त्याः, प्राणवल्लभेन प्राणेभ्योऽप्यधिकं रक्ष्यमाणाया, मातृनिर्विशेषया श्वश्र्वाऽऽत्मनोऽप्यधिकं शुश्रूष्यमाणायाः, तृप्ताया मगधराजपत्न्या मङ्गलाया,… विस्मृत्य सर्वमतीतं दुःखमेदुरं महतोत्साहेन प्रशासनकर्मणि दैनिके स्वात्मानं व्यापारयतः, समागतप्रायस्याऽऽत्मजस्यैव विषयेऽहोरात्रं तांस्तान् मनोरथान् निभृतं कुर्वतः समुत्सार्य नैराश्यान्धकारमतिनिबिडं चन्द्रिकाया इव तस्य जीवन पथमालोकयन्त्या जायाया दोहदं कठिनतममपि पूरयितुं तत्परस्य मगधराजस्य …'अन्तर्गूढघनव्यथं' पतिविरहदुःखं जुगुप्सित्वा स्वपुत्रस्य स्वस्नुषायाः सुखमेव स्वसुखं मानयन्त्याः, 'सर्वथा देवताः स्वस्तिकरिष्यन्ति' इति विश्वासेनाऽऽत्मानमात्मनैवावलंबमानायाः', 'पौत्रस्यैव-कदाचिच्चञ्चलस्य कदाचित् शान्तस्य कदाचित् विदन्तं हसतः कदाचिन्निष्कारणमेव रुदतः कदाचिदङ्के प्रसुप्तस्य कदाचित् क्रोडे धृतस्य—विषये चिन्तयन्त्या मगधराजमातुर्वैशालीदेव्याः,…राजपुत्रजन्ममहोत्सवमासन्नप्रायं समीक्ष्य प्रमोदमपारमनुभवत, महोत्सवयोजनास्तास्ताः परिकल्पयत,स्तत्सामग्रीसम्पादने निभृतं प्रवर्तमानस्य मगधराजपरिजनस्य,… महान्तमुदन्तं मगधराजपुत्रजन्मन उत्सुकोत्सुकेन मनसा प्रतीक्षमाणस्य मागधजनसामान्यस्य च…अविदितकल्पा एव व्यरंसिषुः।

प्रासूत च मगधराजपत्नी मासोत्तमे मार्गशीर्षमास एकस्मिन् शोभननक्षत्रे सुप्रभाते,—मगधराजविषाद इव क्वाऽपि विलीने नैशेऽन्धकारे, मागधजनोत्साहसंपदीव सर्वतः प्रसरन्त्यामारुण्यां प्रभायां, राजपुत्रजन्मोत्सवदिदृक्षया परस्परमाह्वयत्स्विव कूजत्सु सोत्साहं, सद्यः प्रबुद्धेषु पतत्रिकुलेषु, प्रसूतिवेदनाऽऽतुरमगधराजपत्नीसन्त्रासपरिजिहीर्षयेव मन्दं मन्दं वहति प्राभातिके समीरणे,—सुदर्शनं द्वित्रिंशल्लक्षणोपेतं भाग्यशालिनं सुतं…श्रद्धा संङ्कुलमिव पावनम्।

आकर्ण्य च तां चिरप्रतीक्षितां सुवार्त्तां—सूतिकागृहस्थिता रात्रिजागरणाऽऽरक्तलोचना हृष्टा शांता राजमाता सद्योजातस्य पौत्रस्य दीर्घमायुराशंसितुं, स्वभावकृपणोऽपि मितवचनोऽपि गूढभावनोऽपि मगधराज उदारेण हृदयेन राज-

CC-0 Pulwama Collection. Digitzed by eGangotri

कीयकोषागारसञ्चितमपारं धनं याचकवृन्देष्वाशीर्वचनमुखरेषु वर्षितुम्, उन्निद्रा राजमाता माद्री विरम्य प्रतीक्षायाः सद्यः प्रसुप्तौ हल्लवेहल्लौ पुनः सोत्साहं प्रबोधयितुं,...हर्षातिरेकविधूतसर्वमर्यादः राजपरिवारपरिजनः सावेगं परस्परमालिंगितुम्,...आनन्दोल्लासविस्मृतस्वपरभावो मागधजनश्च प्राङ्गणेषु मार्गेषु चत्वरेषु नर्तितुम्...आरभत।

सा चाऽऽनन्दलहरी...अमान्तीव पितृहृदययोरप्राप्नुवतीवावकाशं संबन्धिजनमानसेषु, वेगेन वर्धमानाऽचिरादेव समग्रं मागधं साम्राज्यं व्याप्नोत्...भागीरथीव वर्षासु प्रवृद्धजलौघा वेगवती।

अध्यगच्छच्च प्रचण्डवोचिस्वरूपं मगधराजपुत्रस्य नामकरणमहोत्सवदिने। तस्मिन् हि ज्योतिर्वित्प्रशंसिते शुभलग्न,-आ ब्राह्ममुहूर्तादेव,-राजधानीयायिनो मार्गा उपमार्गाश्च...विविधवयोवेषवृत्तान्तैः कैश्चिदश्वारूढैः कैश्चित् शकटस्थितैः कैश्चित् पदातिभिः सर्वैरपि परिहासचञ्चलैर्ग्रामीणैः, सम्यगवलोकयितुं भाविनं स्वपतिं भाग्यशालिनं मागधराजलक्ष्म्या गृहीताभिरसंख्याभिस्तनुभिरिव नानोज्ज्वलवेषाभिरुत्सवगीतमुखराभिर्विविधमण्डनमण्डिताभिर्मागधीभिः, राजगृहं राजप्रासादं मगधराजं युवराजं चावलोकयितुमुत्सुकोत्सुकैः पृच्छामुखरैः कौतूहलचञ्चलैः मार्गनिपतितान् वृक्षानारोहद्भिः प्रलम्बमानासु लतासु दोलायमानैः निर्मलेषु निर्झरेषु निमज्जद्भिः श्रुत्वा सोपालम्भमाह्वानं ज्येष्ठानां प्रधावद्भिः परस्परं तारस्वरमाह्वयद्भिर्बालकैः...सजीवा इव बभूवुः।

सर्वे च राजधानीमार्गाः प्रसिक्ता महाप्राकारद्वारान्तःप्रविशद्विविधनिवासनिःसरद्राजप्रासादाभिमुखसंसरदसंख्यमागधजनसंमर्दाकुलाकुलाः।

अचिरादेव राजगृहमध्यवर्ति तद्राजगृहं...प्रसरदारुणतेजश्छटोज्ज्वलितया मन्दप्राभातिकसमोरसमीरितया हर्यङ्कांकितया राजकुलपताकया तर्जयदिव मगधरिपून्, प्रोद्घाटितै रगणितवातायननयनैः निःस्पन्दमवलोकयदिव प्रजाजनानामुत्साहं, सर्वतः प्रसरन्तीभिः श्रुतिमधुराभिः माङ्गलिकगीतध्वनिलहरीभिः व्यञ्जयदिव स्वोल्लासं, समापतितोच्चाधिकारिजनवाहनाऽऽकुलाकुलप्राङ्गणं, चतुर्दिक्कृतसंमर्दानामासङ्ख्यानां मागधानामक्षिलक्ष्यीभूतं,...मागधराजलक्ष्म्या उत्सुकोत्सुकाया हृदयमिव...उच्छ्वसितुमारभत।

आरभत च...विशालं, पुरुषप्रमाणवातायनप्रविशद्दिनकरकराऽऽलोकिताभ्यन्तरं, लम्बमानविकचकुसुममालाऽलङ्कृतसहस्रस्फटिकस्तम्भं, चतुष्कोणावस्थितबृहद्राजतधूपपात्रनिःसरद्धूपवल्लरीसुवासितं, शुभ्रवेषाभिः रजतदण्डधारिणीभिः धवलकुसुममालाविभूषितकेशकल्पनाभिः परिचारिकाभिः सादरमुपवेशिताभिः कौशेयाऽऽवृततनुतनुलताभिः रत्नखचितभूषणभूषिताभिः स्मयमानवदनकमलाभिः विविधोपहारहस्ताभिः सामन्तवरेण्यानामुच्चाधिकारिणां नगरश्रेष्ठिनां

CC-0 Pulwama Collection. Digitzed by eGangotri

राजदूतानां च रमणीभिराकुलाकुलं, राजसिंहासनोपविष्टेन धवलवेषेणानुकूल-वेषाभ्यां कौतूहलपरवशाभ्यां हल्लवेहलाभ्यां राजकुमाराभ्यामलङ्कृतोभयपार्श्वेन शुभ्रमौक्तिकमालालङ्कृतवक्षःकपाटेन पूजातिलकमण्डितविशालभालपट्टेन प्रसन्नया प्रशान्तया सरागया दृष्ट्या नामकरणसंस्कारविधिसामग्रीसंयोजने व्यग्रान् समीपवर्तिनः रुद्राक्षमालालङ्कृतकण्ठान् भस्मचर्चितललाटपट्टान् द्विजोत्तमानवलोकयता मगधराजेनालङ्कृतमध्यं…राजसभागृहं…प्रतीक्षितुं प्रथमं दर्शनं युवराजस्य।

अचिरादेव च सा प्रतीक्षा साफल्यमध्यगच्छत्।

शीघ्रमेव हि वृद्धा राजमाता कृतदेवतार्चना प्रत्यग्रसौभाग्यतिलक भूषितरेखाङ्कितभालप्रदेशा शुभ्रांशुका, नितम्बबिम्बचुम्बिसद्यःस्नानार्द्रघनकेशपाशया प्रणतकुलदेवतया सद्यःकृतकज्जलरेखाकृष्णतरनयनकमलया गौरतरवर्णया कमनीयतरतनुलतया प्रोन्नततरकुचभारया महार्होत्तरीयकाऽऽवृतोत्तमाङ्गया मातृदेवतयेव मानुषीमाकृतिमभिप्रपन्नया तृप्तया युवराजमात्रा मञ्जुलादेव्या तस्या अभिन्नहृदयाभिः सखीभिः परमविश्वसनीयाभिश्च सेविकाभिरनुगम्यमाना, पुरः प्रधाविताभिः वेत्रधारिणीभिरुपदिश्यमानमार्गा, किञ्चिदस्थिरपदक्षेपा, प्राविशद्राजसभागृहं, गृहीत्वा किञ्चित्प्रकम्पमानयोः क्षीणयोरपि दृढयोः हस्तयोः महार्हवस्त्रावगुण्ठितमदृश्यप्रायविशेषं हर्यङ्कवंशाङ्कुरं नवीनम्…आशानिधानमिवासंख्यानां मागधानाम्।

स्वीकृत्य चाभिवादनानि ससंभ्रममुत्थितानां विरम्य संभाषणादेकाग्रया दृष्ट्या तत्प्रवेशमेवावलोकयितुं प्रवृत्तानां पुरंध्रीणाम्…अग्रे सृत्वा…सादरमुत्थितस्य स्वपुत्रस्य हस्तयोःवज्रकठोरयोरपि स्नेहमृदुलयोः न्यधात् स्वं पौत्रं…निधिमिवहर्यंकवंशस्य।

मगधराजस्त्वादित एव तनयाननकमलावलोकनौत्सुक्योत्ताम्यद्हृदयः प्राणसर्वस्वमानन्दनिधानमात्मजं चिरप्रतीक्षितं स्वहस्तयोरुपलभ्य क्षणमात्रं विस्मृतस्थलकालव्यक्तिविवेकी विस्फारिताभ्यां निःस्पन्दाभ्यां तृषिताभ्यां नयनाभ्यां शिशुमुखं निमीलितनयन किञ्चित्स्फुटितरक्तजलसंनिभमापिबत्…पितृवात्सल्यमूर्तिवन्निश्चलस्तस्थौ। अन्यस्मिन्नेव च क्षणेऽनुभूय हस्तस्पर्शं वयोवृद्धस्य तपःश्रेष्ठस्य राजपुरोहितस्यप्रकृतिमापन्नः, सर्वेषामेव सस्मिताक्षिलक्ष्यीभूतमात्मानं साक्षात्कृत्य किञ्चिल्लज्जित उपाविशत् सिंहासने कथमपि क्रोडे कृत्वा स्वतनयम्। अन्वजानाच्च राजपुरोहितं नामकरणसंस्कारविधये। प्रसुप्ततनयमुखकमलभृंगायमाननयनस्तु नाजानात् द्विजवरेण्यैः समंत्रोच्चारं प्रारब्धं यथासमयं च समापितं तम्। पुनरेकवारं राजपुरोहितेन स्मयमानेन प्रबोधितः नामकरणार्थं प्रार्थितश्च, क्षणमात्रमवगाह्य स्वभार्याया नातिदूर एवोपविष्टायाः कर्णान्तविश्रान्तयोः भावगभीरयोर्मनोज्ञयोः नयनयोरनुभूय तस्याः

CC-0 Pulwama Collection. Digitzed by eGangotri

संमति नि:शब्दां मन्द्रया भावोद्रेकघर्घरया वाण्या 'उदयभद्र' इत्यात्मजस्य नामाकरोत् ।

उदगाच्च सहसा राजप्रासादशिखरात् तीव्रमधुरस्तूर्यध्वनि: पटुपटहनिनादानुसृत: नामकरणसंसूचक•• आकर्ण्य यं 'जयजीवे'ति निर्घोषै: विदारयितुमिवाम्बरतलंस्फोटयितुमिव दिक्चक्रवालं प्रकंपयितुमिव भुवनत्रयमारेभिरे मागधा असंख्या••• आ ब्राह्ममुहूर्ताद्राजप्रासादस्य समंतादेकत्रभूता: । आरेभिरे च ससुतस्य मगधराजस्य दर्शनं प्रार्थयितुम् ।

अवधीर्य तु मागधजनकोलाहलं राजसभागृहेऽनतिस्पष्टं श्रूयमाणं, राजसिंहाऽऽसनसमीपवर्तिनी धवलवेषा महाप्रमाणा प्रधानवेत्रधारिणी राजकुलाऽऽचारमनुसृत्य मगधराजाय सदाराय ससुताय स्वस्वोपहारान् समर्पयितुमुपस्थिता: पुरंध्रीस्तारदीर्घेण स्वरेणाऽऽमंत्रयत ।

श्रुत्वैव तदुदतिष्ठन्नातिदूर एव समुपविष्टाऽतिवृद्धा वलितदेहा गलितधवलकेशा सामान्यवेषा दासी काचन । अवलम्ब्य च हस्ते पौत्रीमुपासरत् शनै: शनै: सिंहासनं वेपमानमस्तका स्खलत्पदक्षेपा । 'नूनमियमस्माकं कुलस्य वृद्धतमा सेविका 'अस्मिन् माङ्गलिकेऽवसर उपहारसमर्पणस्य ममैवाधिकार: सर्वातिशायी-इत्यामनन्ती वत्सं द्रष्टुमागच्छति, दृष्टिदोषं च परिहर्तुं कुशलकामनयेति' पर्यालोच्य सस्मितमवलोकयति मगधराजे, सा, सादरं दत्तावसराऽन्याभि: रमणीभि: सिंहासनस्य समीप उपागमत् । परिहृत्य च दृष्टिदोषं स्वामिपरिवारस्य, कौतुकादवनमितपलितमस्तका, अङ्के राज्ञ: सुखं सुप्तस्यार्भकस्य मुखं चिरमिव निदध्यौ मन्दयादृष्ट्या, स्वगतमिवास्फुटमुवाच—'अहो !•••प्रपितामहमनुकरोत्ययं•• प्रोन्नतेन नासावंशेन•••' इति । अपससार च शनै: शनै: प्रभूतराजकीयप्रत्युपहारव्यग्रकम्पमानहस्ताऽऽशीर्वचनमुखरा ।

मगधराजस्तु नितान्तमनपेक्षितामस्फुटां तां टिप्पणीं निशम्याकस्मात् कौतूहलाक्रान्तोऽङ्के निलीनस्य शिशोर्मुखमेकाग्रया दृष्ट्या ध्यायन् स्वयमपि तद्वैशिष्ट्यं पुरुषप्रमाणे पितामहतैलचित्रेऽनेकवारं दृष्टचरं परिलक्षयाञ्चकार ।

आच्छन्नं च बभूव तत्क्षणमेव तस्य निरभ्रमाननं कयाऽपि छायया । अस्तमियाय तस्य प्रसादमधुरं स्मितम् । उदियाय च तत्स्थाने किमपि गाम्भीर्यमिव ।

अज्ञश्च तत:परमनन्तकालपर्यन्तमिव निरन्तरं समर्प्यमाणानां विविधानामुपहाराणां समुदीर्यमाणानां कौतुकोद्गाराणां प्रवृष्यमाणानामाशीर्वचनानां चाऽध:-कृत दृष्टिरनभिज्ञस्तत्क्षणमेवानुभूततद्विषादाया भार्याया: सविस्मयानां मूकपृच्छामुखराणां व्याकुलानां दृष्टिपातानां•••चिरं तस्थौ मूर्तिवत् ।

CC-0 Pulwama Collection. Digitzed by eGangotri

राजपुरोहितेन सादरमनुरुद्धश्च, यन्त्रचालित इव, तनयमूर्णावृतं स्कन्धे कृत्वा, भार्यया सह प्रासादाट्टवातायनेऽनेकपुरुषविस्तृते समुपस्थायाधःप्रसृतस्योर्ध्वदृष्टेः कौतुकातिरेकतरंगायमाणस्यापारस्य प्रजाजनसागरस्य गभीरं जयघोषगर्जनं स्वीकृत्य दक्षिणभुजदण्डमुन्नमय्य...न्यवर्तत प्रासादाभ्यन्तरं शनैः शनैः।

अशक्नुवन्निवाधिकतरं सोढुं सर्वत उद्वेल्लन्तं हर्षसागरम्, आकस्मिकया शिरोवेदनया तीव्रया पीड्यमानः किल, चिन्ताम्लानाया भार्याया अवलोकयन्त्या एव, स्वविश्रामकक्षान् परावर्तत।

अयापयच्च कथमपि समयं...शयनपतित एव...पिहितवातायनकपाटेऽन्धकाराच्छन्ने निःशब्दे शयनकक्षे,...एकाकी,...अस्वीकुर्वन्-अस्वास्थ्यं शरीरस्य निमित्तीकृत्य--जनन्या मध्याह्नराजपरिवारभोजाऽऽमन्त्रणम्, अवधीरयन् भार्यायाश्चिताकुलायाः पृच्छाः, तिरस्कुर्वन् सेवायां तत्कालमुपस्थितस्य राजवैद्यस्यौषधानि।

अथाऽपारयन्निव द्रष्टुं तस्य मनोग्लानिमधिकतरं भगवान् सहस्ररश्मिः गगनाङ्गणादधोऽवततार म्लानप्रभः। बिभ्यन्निव विषण्णात् विमनस्कादुग्रस्वभावात्तस्मात् सायं समीरो मन्दं मन्दं प्रवातुमारभत। बहिः प्रवहदिवाऽमात्वा तस्य मनसि प्रगाढमौदासीन्यं तमोमिषेण दश दिशो वेगेनाऽऽक्रमितुं प्रावर्तत।

अलभमानश्च मुक्ति केनाऽप्युपायेन स्मृतिभ्यो मर्मच्छेदिनीभ्यो विचारेभ्यो हृदयविदारकेभ्य आशंकाभ्यश्च भयानकाभ्यः, प्रयतमानः, निमज्जयितुमात्मानं विस्मृतिसागरे सुषुप्ति समालिंग्य...उदतिष्ठत् कथमपि शयनात्। मदान्ध इवास्थिराणि पदानि क्षिपन् वातायनकपाटानि प्रवेशद्वाराणि च दृढमप्यदधात्। निर्वातदीपश्च पुनः प्रक्षिप्य स्वदेहं शयने प्रायतत स्वप्तुं निमीलितनयनः।

चिरं प्रायतत।

अपश्यच्चाऽऽत्मानं...एकस्मिन् अदृष्टपूर्वे विस्तृताऽऽराममध्यवर्तिनि प्रलम्बमानविविधकुसुमितशाखामनोहारिणि लतानिकुञ्जे घनलतावितानेदृषदासने पर्यङ्ककल्पे समुपविष्टं भाषमाणं च महादेवीं मङ्गलां स्थूलामपि सूक्ष्मरेखाङ्कितभालप्रदेशामपि क्षीणकृष्णवर्तुलकुण्डलितनयनकमलामपि किञ्चिदप्यन्यूनीभूतरामणीयकां समीपोपविष्टां...'महान् खलु कालो व्यतीतो...दाक्षिणात्यस्य तस्य नृपतेः स्वां कन्यामेकमात्रां वत्सस्योदयभद्रस्य कृते भार्यात्वेन प्रस्तुवतः। अनधिगत्य किमपि प्रत्युत्तरमस्मत्सकाशात् विस्मयमानेन तेन संप्रेषितो दूतोऽतीत एवाहनि राजसभायामुपस्थाय स्वामिनः प्रस्तावं स्मारितवान्।...न जानीमहे—

CC-0 Pulwama Collection. Digitzed by eGangotri

किमिति भवती तं प्रस्तावं नाङ्गीकुरुते ?···प्राचीनं तद्राजकुलम् । एकाकिनी सा राजकन्यैव तस्योत्तराधिकारिणी···सुरूपा···सच्छीला···भाग्यशालिनी चास्माभि: श्रुता ।···तत् क इव प्रत्यवाय: स्वीकारेऽस्य प्रस्तावस्य ?'

अश्रृणोच्च तां पुष्पमालागुम्फनव्यापृतहस्तामेव दीर्घं नि:श्वस्यैव गदन्तीं '···न कोऽपि प्रत्यवाय: ··ऋते वत्सस्य मौनात् ।···स हि सुदूराभ्यो विजय-यात्राभ्य: प्रत्यागत···इह कतिचिद्दिनान्येव निवसन्···मयाऽनेकवारं पृष्ट एतदर्थम् । मूक एवचोपलब्ध: ।···शपे मम जीवितेन ।···परिलक्षितं मया नूनं तस्य स्वभावे ···व्यतीतेषु एषु मासेषु कतिपयेषु···परिवर्तनमिव किमपि ।···पौरस्त्याया अनार्य राज्यविजययात्राया: प्रभृति···विमनस्क इव···समुद्विग्न इव···असहमान इवा-वयो: सान्निध्यं···व्याकुल इवस्वातन्त्र्यस्य निरपेक्षस्य कृते···स···मयाऽनुभूत: ।··· अष्टाविंशो वर्षग्रन्थिर्वत्सस्य···अतीत एत्र मार्गशीर्षे···बहु मानितोऽस्माभि: । ···तत् किम्······आर्यपुत्रा: न मन्यन्ते यत्···विन्यस्य साम्राज्यभारं तस्य स्कन्ध-योस्तरुणयो:···आवयो: वानप्रस्थाश्रमे कृतप्रवेशयो: नगाधिराजोपत्यकाप्रदेशे प्रवेश: समीचीन: स्यात् ?···(क्षणं विहस्य) कदाचित्···सोऽपि···सहधर्म-चारिणीं···स्वयमेव वरिष्यति' इति ।

अश्रृणोच्चाऽऽत्मानं श्रान्तेनाऽऽवेगप्रकम्पमानेन स्वरेण विस्मितेन प्रति-वदन्तं—'तत् किम्···उदय···एतत् महत् साम्राज्यं स्वीयं न मन्यते ?···तं प्राणा-धिकं मन्यमानान् अस्मान् परान् मन्यते ?···एवमेवैतत् ।···अत एव-स···मया··· इतो गान्धारेभ्य: प्रयाणात् प्राक्···प्रशासनिकस्य कार्यस्य कस्यचिद्विषये पृष्ट··· उदासीन इवावर्तत···तटस्थ इव ।···एवमेवैतत् ।···सुष्ठु देवी भणति ।···मध्यं यौवनस्याध्यारूढो वत्स: न:···प्रत्यवायान् मन्यते ।···तत्···तत्···गान्धारेभ्य: प्रत्यागतायैव तस्मै प्रदाय महदेतत् साम्राज्यम्···आवां···।'

अश्रृणोच्च सहसा···असमाप्तवचन एव···वेगेन महता प्रासादमहाद्वारमिव समापततां कतिपयानामश्वानां खुरध्वनिम्,···अकस्मादुद्भवन्तं खड्गसंघर्षस्येव तीव्रं शब्दं,···विदारयन्तमिव विछिन्नप्रायामपराह्णकालीनां शान्ति मर्माहतस्येव म्रियमाणस्येव कस्यचिद्वेदनाविह्वलमाक्रोशम् । अन्वभूच्च क्षणमात्रानन्तरं सर्वत: पूर्ववत् प्रसरन्तीं प्रगाढां नि:शब्दताम् ।

यावच्च प्रयतते विस्मित: 'किमेतद्' इति विनिश्चेतुं तावत् परिलक्षया-ञ्चकार लतानिकुञ्जद्वारान्त:प्रविशन्तं सायंकालिकदिनकरकरौघमकस्मादवरुद्ध-प्रसरम् ।

'क: खलु धृष्णोत्येवं मर्यादोल्लङ्घनेन'-इति संतप्तस्तस्यां दिशि दृष्टिं

CC-0 Pulwama Collection. Digitzed by eGangotri

क्रुद्धां निक्षिपन्तवलोकयामास लोहकवचाऽऽवृतसर्वांगतया दुर्लक्ष्यविशेषमपि। समवत्ताकितपूर्वमिव भासमानं महाप्रमाणमाजानुबाहुं रुधिरार्द्रखड्गं पुरुषं कञ्चिदुद्धतया गत्या प्रविशन्तं लतानिकुञ्जद्वारेण···अनुगम्यमानं तुल्यवृत्तान्तं रसंख्यैः

'···कोऽयम् ?···के चैते ?···नैते मागधाः । ···अंगदेशीया···माद्रा···आवन्तिका···मध्यदेशीया वा ।···नैते मम रक्षकाः···सेवकाः···सैनिका वा । स्वप्नेऽपि खलु ते न धर्षिष्यन्ति मर्यादामेवमतिक्रमितुम् ।···तर्हि के खल्वेते ?···कथमेते प्रविष्टा इह ? (सक्रोधं) रक्षका मे···चिरात् खलु शस्त्रसंघर्षस्यानभिज्ञा ··एनान् शस्त्रादग्रान् हिंस्रान् दृष्ट्वव भीत्या कण्ठगतप्राणाः···स्वकर्तव्यान्नूनं परिभ्रष्टाः । ···यदि मम पुत्र उदयः, अत्राभविष्यत् तर्हि तान् नून जीवत एव दाहयिष्यत्'··· इत्येवमादि किमपि किमपि चिन्तयन्नेवापश्यत् तं पुरुषं समीपमुपसर्पन्तं···शिरस्त्राणं च सहसाऽपनयन्तम् ।

प्रत्यभिजानाच्च तस्मिन् सहसा···पुत्रमात्मनः···आत्मन एकमात्रं पुत्रं··· उदयभद्रं···मगधसाम्राज्यस्योत्तराधिकारिणं ··शूरं···दक्षं···युवराजम् ।

तत्क्षणमेव परिलुप्तभयो हर्षातिरेकविह्वल···उत्थाय···प्रसार्य बाहू··· तमालिङ्गितुं प्रयतमान एवाऽऽत्मानमपश्यत्···तेन हठान्निःसारितं···भूमौ निपतन्तम्···अन्तराल एव भार्यया भयमूकया सहसा विधृतम्···अवलोकयन्तं भीताभ्यां चकिताभ्यां सहसा क्षीणाभ्यां नयनाभ्यां पुत्रं स्वं निःशब्दं कटु हसन्तम्···उत्थापयन्तं च रक्तधारं खड्गं नग्नं तं प्रहर्तुम् ।

अद्राक्षीत्···अकस्मात् तत्रोपस्थितं विस्मितं पितामहं भट्टीयं···सास्त्रं पितरं बिम्बसारम्···आवेगप्रकम्पमानां ज्येष्ठां मातरं कोशलदेवीं···हताशां दीनां जननीं वैशालीं···सर्वानिव···परिवृत्याऽऽततायिनमुदयभद्रमनुरुन्धतो विरन्तुं पितृघातात् । अद्राक्षीत् लतानिकुञ्जकोणेस्थितं ··तं···कृष्णवर्णं नग्नप्रायशरीरं कृशदेहं प्रवृद्धधवलश्मश्रुजालं रक्तभीषणनेत्रं सिन्दूररेखोदग्रभ्रूमध्यं कापालिकं··· निरीक्ष्य तं दीनं स्मयमानं ··प्रेरयन्तमिवाऽऽवेशेनोदयभद्रं प्रहाराय । अद्राक्षीत् तद्ग्रीवाप्रदेशमभिलक्ष्य शनैः शनैरवतरन्तं रक्तरञ्जितं खड्गमात्मजस्य निःशब्दम् ···उच्चैः···हसतः ।

अनुभवन्निव तस्य हिमस्पर्शं···चुक्रोश···सोरःस्फोटम् ।

व्यलोकयत् चात्मानं···पिहितवातायनकपाटे निर्वापितदीपेऽन्धकार ऽऽऽच्छन्ने निःशब्दे चिरपरिचिते शयनकक्षे···पर्यङ्कनिपतितं शुष्यन्मुखं स्वेदक्लिन्नं वेपमानगात्रं प्रयतमानमाक्रोष्टुं प्राणपणेन ।

CC-0 Pulwama Collection. Digitzed by eGangotri

चिराच्च साक्षात्कृत्य वास्तविकीं परिस्थितिं कथञ्चित् प्रकृतिमापन्नः निश्चेतन इव शयन एव तस्थौ...निर्निमेषदृष्टिः...विचारयन्निव...संप्रधारयन्निव स्वात्मनैव सह किमपि ।

निश्चित्य किमपि समुदतिष्ठत् शयनात् ।

उद्घाट्य च द्वारं...अस्थिरया गत्या प्रासादान्निर्गतः, प्रासादपरिसरान्तर्वर्त्तिन्या अश्वशालायाः शनैः शनैरभिमुखीभूतः, निद्रालुनाऽपि क्षणमात्र एव प्रत्यभिज्ञाय स्वामिनमागतं विनिद्रेण प्रभञ्जनेन ह्रेषारवमुखरेणाभिनन्दित आरुह्य तं निमिषावसर एव महाद्वारेण बहिर्निर्जगाम...अनभिज्ञश्चिन्ताम्लानाया, श्रान्ताया अपि विनिद्राया आकर्ण्य प्रभञ्जनह्रेषारवं सौदामिनीप्रत्युत्तरितं विस्मितायाः, सहसा समुत्थाय शयनादुपसर्प्य च स्वशयनकक्षवातायनसमीपं तस्याऽऽकस्मिकं तत् प्रस्थाननिशीथे चकितचकितमवलोकयन्त्याः प्राणवल्लभाया देव्या मङ्गलायाः ।

CC-0 Pulwama Collection. Digitzed by eGangotri

## त्रयोविंशः परिच्छेदः

प्रवसंश्च निर्जनेन भग्नप्रभ्रष्टोत्सवतोरणेन विकीर्णकुसुमरजःपुञ्जकर्बुरेण राजपथेन, महोत्सवपरिश्रान्तैस्तन्द्रालसैः नगररक्षकैरपरिलक्षितएव, अचिराद्विहाय श्रान्तां निद्रितां राजधानीं, पाटलिग्राममार्गमाक्रमितुमारभत...अनभिज्ञः प्रतीपं वहतो हिमशिशिरस्य नैशसमीरणस्य, परित्यज्य प्राच्यङ्कं महता कष्टेन गगनमध्यमारोढुं प्रयतमानस्य क्षयिष्णोः म्लानप्रभस्य चन्द्रखण्डस्य, परिलक्ष्य तस्याऽऽगमनं सर्वथाऽप्रत्याशितं त्रस्तानामासन्नक्षेत्रेषु निलीनानां शृगालानां रोदनस्य, मार्गनिपतितानां ग्रामाणां रथ्यासु सुखं प्रसुप्तानां तस्याऽऽगमनेन विनिद्राणां ग्रामसिंहानां बुक्कनस्य, समाकर्ण्य तत् गृहेभ्यः कथमपि बहिरागतानां निद्रालसानां समवलोक्य तं कज्जलकृष्णतुरङ्गमाधिरूढमनुष्णीषं विलुलितकेशं निर्निमेषाऽऽरक्तनयनं श्यामवर्णं महाप्रमाणं पुरुषविशेषमेकाकिनं निःशस्त्रं प्रवसन्तं भीतानां ससंभ्रमं गृहान्तःप्रविशतां ग्रामवासिनां विस्मितानां दृक्क्षेपाणाम् ।

प्राप चाऽचिरादेव परिश्रमस्वेदकणतारकितललाटपट्टः समुच्छ्वसद्विशालवक्षःकपाटः समीपवर्तिमहानदजलोद्भवद्बाष्पलहरीधूसरिताऽऽकारं परिस्खलच्छिशिरकरासंस्पृष्टप्रायं चित्रलिखितमिव स्वप्नमयमिव प्रातिभासिकमिव गूढायमानं पाटलिग्रामदुर्गम्। विचारमग्नतया चापरिलक्षयन्नेव तस्यान्तकच्छायाग्रस्तमिव निश्चेतनं निःशब्दं निःस्तब्धं रूपम्, उपययौ तस्य पिहितकपाटं प्रज्वलदेकमात्रालातप्रकाशितं महाद्वारम् ।

आकर्ण्य खुररवं सर्वथाऽनपेक्षितमुपलफलकनिचिते महाद्वारमार्गे किञ्चिद्विस्मितैः समुद्घाट्य कपाटं बहिरागतैः समवलोक्य तं परमचकितैः किञ्चिन्निवेदयितुमिव प्रवृत्तैः क्षणमात्रानन्तरमेव विचार्येव किञ्चिन्मूकभावं प्रतिपन्नैः म्लानवदनैः दुःखग्रस्तैरिव विलुप्तक्षात्रोचितदर्पैस्तन्मुखावलोकनं यावच्छक्यं परिहरद्भिः प्रासादरक्षकैः सादरं प्रवेशितः, अवतीर्य प्रभञ्जनात् स्वेदक्लिन्नगात्रात् फेनिलमुखात्, विहाय तमतीन्द्रियया कयाचिच्छक्त्याऽनुभूयेव समागतप्रायामापदं स्वामिनो विशालाभ्यां कृष्णाभ्यां साभिप्रायाभ्यामिव नयनाभ्यां स्वामिनं निर्निमेषमवलोकयन्तं स्फुरद्घोणमश्वपालकहस्तयोः, चिरस्य खलु कालस्यानाक्रान्तेन मार्गेण दृषद्वता, विज्ञाय सेवकात्तदागमनवार्त्तां ससम्भ्रममुपस्थितेनापराधबोधग्रस्तेनेव मूकेनाधोदृष्टिनाऽकालवार्धकाऽऽक्रान्तेनेवावनतस्कन्धेन...मन्दगति...अनुसृतो दुर्गपालकेनातिविश्वस्तेन, पितुः काराकक्षमुद्दिश्य चचाल ।

CC-0 Pulwama Collection. Digitzed by eGangotri

उपसृत्य च तं, बहिर्भागे, क्षीणायां चन्द्रिकायामलक्ष्यप्रायाणां दु:खभारावसन्नानामिव पापबोधजडानामिव कतिपयानां नि:स्तब्धानां निश्चलानां परिचारकाणां समूहानवलोक्याऽपि विमनस्कतयाऽविस्मितः, नि:स्तब्धं प्रविवेश तदन्त··· उत्क्रान्तप्राणेन मुखेनेव व्यात्तेन प्रवेशद्वारेण।

अवलोकयामास, च घनतरीभूतेनेवोग्रगन्धिनेव दु:सहेनेवान्धकारेणाभिभूतदृष्टि: सहसा कुण्ठितगति:, प्रथमं, कक्षकोण एकस्मिन् सधूमं ज्वलन्तं रक्तप्रकाशं-नयनमिव भीषणं कस्यचिद्दानवस्य-नारकीयवह्निलेशमिव मृत्युलोक आविर्भूतम्-अलातमेवैकमात्रम्।

चिरादिव ततो विकृष्य दृष्टिं निर्निमेषामेकाग्रामितस्ततस्तां व्यापारयन्··· ददर्श तस्यास्धतादेवाऽऽस्तृते प्रस्फुरदलातप्रकाशिते पर्यङ्के जीर्णप्राये निश्चेष्टं पतितां विशीर्णास्तिरणाऽऽच्छादितां कङ्कालशेषां काञ्चित् मानवाकृतिं,··· तस्या: समीप एव तस्या: पर्यङ्कस्यैकदेश एव समुपविष्टां किञ्चिदवनतमस्तकां निश्चलां क्षीणां विलुलितधवलालकां चाऽन्याम्।

विदितयाथार्थ्योऽप्यशक्नुवन्निव विश्वसितुं, नि:शब्दमग्रे सृप्त्वा कृतपाषाणस्तम्भावलम्बोऽनिमिषदृष्ट्या ध्यायन्, शनै: शनै: प्रत्यभिजानात्···भारतवर्षविख्यातं हर्यङ्ककुलभूषणं मगधराजं तदुत्तराधिकारिणा युवराजेनैव सिंहासनाद्विप्रकृष्टं, मरणोन्मुखं, पितरमात्मजेनैव विश्वासघातिना कारागृहे नरकतुल्ये निक्षिप्तं,··· प्रसिद्धस्य कोशलनरेशस्य च प्राणप्रियां भगिनीं, मगधराजस्य महादेवीं कोशलदेवीं पतिव्रतां, ज्येष्ठां मातरं, पुत्रेणैव प्राणप्रियेण बन्दिगृहे विनिक्षिप्ताम्।

लौहपाद इव भूमिबद्ध इव पदमेकमपि निक्षेप्तुमसमर्थोऽशृणोत् मन्द्रां वाणीं पार्श्ववर्तिनो दुर्गपालस्य····'चिरात् खलु मन्दतरीभवत् प्राणज्योतिरेतेषां, विगतैर्दिनै: कतिपतैरस्तंगतप्रायं, व्यतीते प्रभातसमयेऽकस्मात् नूनं प्रजज्वाल। निश्चेष्टप्रायं मन एतेषां···सहसा दक्षं बभूव। विलीनप्राया वाक्शक्तिरेतेषां··· सहसा कार्यप्रवणा। दृक्शक्तिश्च तेजस्विनी।···किमपि समुत्प्रेक्षमाणा इव किमपि तर्कयन्त इव किमपि सम्भावयन्त इव किमप्याशासाना इव कमप्यपेक्षमाणा इव कमपि प्रतीक्षमाणा इव···तत: प्रभृति विद्यन्ते मूका एते,···विज्ञायेव तन्मनोभिप्रायमाकुलाकुलया विदीर्णस्वान्तयाऽपि धीरगम्भीरया भार्यया विधृतहस्त:।···न जाने···का खल्वाशा···का खल्वभिलाषा···का खल्विच्छा···एतान्··· जीवितहतकमेतत् त्यक्तुं नानुमोदत···'इति गदन्तीमस्फुटाक्षरम्।

प्रसह्य प्रष्टुं किञ्चित् प्रवृत्त एव च सहसाऽवलोकयामास···समाकर्ण्यैव

CC-0 Pulwama Collection. Digitzed by eGangotri

तं मन्द्रमपि वार्त्तालापं तत्सम्मुखीभवत् प्रवृद्धधवलश्मश्रु घनशुभ्रभ्रूरेखांकितं विदन्तं मुखं पर्यङ्कनिपतितस्यैव पितुः।

आकृष्यमाण इव तस्य वृद्धयोरपि श्रान्तयोरपि निमीलितुमातुरयोरपि समवलोक्य तं सहसा सोल्लासयोः सोत्साहयोः नयनयोर्ज्योतिषा...अवश इव... शनैःशनैःस्तस्य समीपे जगाम...तदेकनिबद्धदृष्टिः।

मोहित इव च क्लान्तयोर्नयनयोरुदीर्य जरावलिते शुष्क आनने प्रसरताचन्द्रातपेनेव मरुभूमौ प्रस्फुटता-अस्फुटेन तस्य स्मितेन...तत्पर्यङ्कसमीपे जानुभ्यां गतः अनभिज्ञः क्षणमात्रं तदभिमुखीभूतस्य दृष्ट्वैव तं चकितस्यापरस्मिन्नेव निमिषे घृणानिष्ठुरस्य प्रसह्यान्यतो व्यावर्तितस्य ज्येष्ठमातुराननस्य...दधार तस्य जीर्णं विलुलितत्वक् शिशिरमस्थिप्रायं दक्षिणं हस्तं प्रकम्पमानाभ्यां स्वहस्ताभ्याम्।

निमग्नश्च तस्य हिमधवलपक्ष्मणोः शुभ्रभ्रूलताऽऽच्छन्नप्राययोः श्रान्तयोरपि प्रसन्नयोः हिमानीपरिवेष्टितस्य किञ्चिल्लक्ष्यनिर्मलजलस्य ह्रदद्वयस्य शोभां विडम्बयतोः नयनयोः...विचलितचित्तः...सस्मार सहसा...कदाचित् कौतुकेन विकसितयोः कदाचित् क्रोधेनाऽऽताम्रयोः कदाचित् परितापेन म्लानयोः कदाचित् हर्षेनोत्फुल्लयोरन्ते च दुःखेन निर्विण्णयोस्तयोर्विविधाश्छटाः।

सस्मार मन्त्रोज्जीवितमिव स्वमतीतं दुःखजडं क्षणार्द्धेन।

सस्मार स्वं कपटकुटिलं बर्तनमनार्यम्।

सस्मार तस्या एव निशाया मुखेऽनुभूतं रोमाञ्चकृद्दुःस्वप्नम्।

आविर्बभूव च प्रस्फुरदलातप्रकाशित उच्छूननाडीकलङ्कितभालप्रदेशे क्षुभिते तस्याऽऽननेऽन्तस्तलादुद्गच्छन्ती काऽपि गभीरा वेदना।

अभिज्ञाय तां समवेदनाऽऽकुलित इव तस्य पिता, तदेकनिबद्धदृष्टिः, तं सान्त्वयितुमिव समाश्वासयितुमिव क्षमितुमिव...एकीकृत्य सामर्थ्यं विनष्टप्रायं शयनादुत्थातुं प्रयतमानोऽक्षमस्तावन्तं परिश्रमं सोढुं...उदीर्याऽऽवेगघर्घरयाऽस्फुटाक्षरया वाण्याऽन्तिमं संबोधनं...प्रियं तस्य...'कुणीक' इति...सहसा पर्यङ्के न्यमज्जत्...उत्प्लुतप्राणपतङ्गः।

अजातशत्रुस्तु...अनभिज्ञ इव पितुः महाप्रयाणस्य तस्य...चिरं तस्थौ चित्रलिखित इव...तथैव धरन् तस्य निर्जीवं हस्तम्।

सहसा चोत्थाय...निरगच्छत् तस्माच्छोकघनात् काराकक्षात्...अज्ञः

CC-0 Pulwama Collection. Digitzed by eGangotri

शोकजडायाः ज्येष्ठाया मातुः विस्मयविस्फारिताभ्यां सन्तापशुष्काभ्यामारक्ताभ्यां नयनाभ्यां प्रशान्तमाननं जीवनसहचरस्य विहाय तामेकाकिनीमनापृच्छ्यैव तस्या अभिन्नहृदयाया अनुज्ञां महाप्रवासाय प्रस्थितस्यावलोकयन्त्या,…अज्ञः काराकक्ष-द्वारसमीपे मूर्तिवत्तिष्ठतोऽधोमुखस्य।पराधबोधभुग्नस्येव दुर्गपालस्य,…अज्ञः द्वार-बहिःप्रदेश एव एकत्रभूतानां दुःखजडानां विषण्णानां मूकानामवनतमस्तकानां परिचराणाम्।

आरुह्य च महाद्वारसमीप एव प्रतिपालयन्तमिव तदागमनम्, उत्कर्णं, तिर्यग्वलितदृष्टि, विज्ञायेव तन्मनोवस्थां मूकं, प्रभञ्जनं…प्रवस्तुमारभत हिम-शीतलायां निःस्तब्धायां रजन्यामेकाकी।

प्रवसंश्चानवरतं…दुःखबधिरो॥विमनस्कः प्राप नातिचिरादेव…युगकल्पायां तमोबहुलायां निशायां तस्यां शनैः शनैरवसानं सर्वमङ्गलकरं प्राप्नुवत्यां, साक्षा-त्कृत्य हर्यङ्ककुलभूषणस्य बिम्बसारस्य प्राणोत्क्रमणं दुःखितानां दिविषदां यानेष्विव क्वाऽपि गतेषु नक्षत्रेषु संख्यातीतेषु, अभिनन्दयितुं तदात्मजस्य महाप्रता-पिनोऽजातशत्रोरात्मशुद्धिसंकल्पं त्वरमाणस्य भगवतो दिनमणेः पावने प्रभाव इवोदीय प्राग्दिगङ्गणे प्रसरति प्रकाश आरुणे, अनुतेप्य वेदनामग्नं मगधराजं निगदितुमिव तत्पश्चात्तापवार्त्तां शुभां नीडनिलीनेभ्यः प्रसुतेभ्यः पतत्रिभ्यो मन्दं मन्दं वहति विकसितविविधकुसुमसौरभभारजातजडिम्नि शीतले प्राभातिके समीरणे, समाकर्ण्येव तां वार्त्तां सर्वथाऽप्रत्याशितां मङ्गलां विलुप्ततन्द्रेषु परस्परं सोत्साहमुद्बोधयत्स्विव मुखरेषु खगकुलेषु,…प्रवेशद्वारं…स्वागतं कर्तुमिव प्रविविक्षूणामुन्मुक्तभावमहोरात्रमपिहितकपाटं…राजगृहसमीपवर्तिनोऽनेकयोजन-विस्तृतस्याभ्रंकषशाखावितानैर्विविधवल्लरीसमालिङ्गितैराम्रतमालाश्वत्थवटोदु-म्बरशालादिच्छायावृक्षैर्निबिडस्य, तेषु तेषु वृक्षमूलेषु निर्भीकं विश्राम्यद्भिः शान्तै-र्मृगकदम्बकैराकुलाकुलस्य, प्रबुध्यमानकलहंसरवमुखरितप्रान्तेन विकसत्कमलाऽऽ-मोदसुरभिणा प्रसरत्सान्ध्यरागरञ्जितेन महाश्रमणपावनप्रभावेणेव सर्वकल-ङ्कापहारिणा तथागतमानसेनेव प्रशान्तेन जिनहृदयेनेव सदा प्रसन्नेन सुगतानुग्रहे-णेव सर्वतृष्णोपशामकेन बुद्धाशयेनेव वीतकल्मषेण जलाशयेनालंकृतमध्यभाग-स्य…वेणुवनस्य…अतिनिबिडप्रोन्नतवेणुपङ्क्ति परिवेष्टितस्य समस्ताऽऽर्यावर्त-विख्यातस्य।

अवतीर्य चाश्वात्…विवेश तदन्तः…एकाकी…पदातिः…अपरिलक्षितः केनाऽपि…अशान्ताभ्यां सतृष्णाभ्यां शोकतप्ताभ्यामारक्ताभ्यां, नयनाभ्यामन्वे-षयन् एकमात्रं तच्छोकापनोदक्षमं मुनीन्द्रं…'दीप्तशिरा जलराशिमिव'।

उपदिश्यमानमार्ग इव वेणुवनमध्यात् सर्वतः प्रसरताऽलौकिकेन परमाह्ला-

CC-0 Pulwama Collection. Digitzed by eGangotri

दकेन वर्णनातीतेन तृप्तिकरेण तेजोऽतिरेकेण, आकृष्यमाण इव विहारवनमध्यात् सर्वत उद्गच्छताऽनुभवमात्रवेद्येन प्रभावातिशयेन, सावेगमग्रेसरन् साक्षाच्चकार ...अचिरादेव ...एकस्यातिविशालस्य स्तब्धस्य मूकस्य स्वयमपि समाधिमभ्यस्यत इव सौभाग्यातिरेकनिश्चलस्येव कृतप्राणायामस्येवाश्वत्थवृक्षस्य मूले बद्धपद्मासनं महाप्रमाणम्, उन्नतमस्तकम्, आरक्तनिर्मलचीवराऽऽवृतसर्वाङ्गम्, नासाग्रनिबद्धदृशं, विशालभालप्रदेशं वृषस्कन्धमाजानुबाहुदण्डं, वृद्धमपि भव्यं, प्रशान्तमपि दिव्यप्रभं, प्रभावशालिनमपि रमणीयविग्रहम्, एकाकिनमपि समुपास्यमानमिवासंख्यैर्यक्षगन्धर्वकिंनरादिभिर्भक्तिप्रह्वै रदृश्यैः, प्रखरज्योतिषा ज्ञानचक्षुषा हृत्पद्ममध्यस्थितं विशुद्धं किमपि परमं तत्त्वं पश्यन्तम्, अभयमुद्रं, 'निधानं सर्वमङ्गलानां,' समुद्गमस्थानं करुणायाः, आशास्थानं चराचराणां, प्रभवं मैत्री भावनायाः, उदयस्थलं दयायाः, उद्धाराय त्रिलोक्या आविर्भूतमिव मानवरूपेणाऽऽध्यात्मिकं सामर्थ्यं, विलोपनाय भ्रान्तिजालस्य जगत्त्रय्याः प्रकटितमिव परमं सत्यं, सर्वतः प्रस्फुरता दिव्येन रमणीयेन सात्त्विकेन तेजोमण्डलेन परिवेष्टितं, षडभिज्ञं, दशबलं, शाक्यमुनिं ...'पावनं पावनानाम्' ।

अवलोकयंश्चानिमिषाभ्यां नयनाभ्यां ...महाकुलोद्भूतमपि सर्वविधसांसारिकसुखोपेतमपि निमिषावसर एव विज्ञाय दुःखमयत्वं संसारमात्रस्य संन्यासमात्यन्तिकमुपेतं, विजित्य सर्वमोहान् तप्त्वा तपः परमं सत्यं निरपेक्षं साक्षात्कृतवन्तं तं महापुरुषं, ...तुलयंश्च तेन सहाऽऽत्मनः शीघ्रकोपं दर्पदुःसहमसहिष्णु कठोरं विश्वासघातकलङ्कितं परपीडकमनार्यं जीवनं ...क्षणमात्रं मूर्तिवत् स्थितः, ...अन्वभूत् सहसाऽऽत्मानं व्याकुलीभवन्तं तस्मान्महापुरुषान्निःसरन्तीष्वतीन्द्रियासु पावनप्रभावलहरीषु निमज्ज्याधिगन्तुं मुक्तिम् आजन्मन उदग्रेभ्यः स्वभावदोषेभ्यः प्रतिपलं कण्ठोपमर्दं निष्पीडयतः पापस्य तस्य कापालिकस्य च प्रभावात् ।

उपासरच्च ...साश्रुदृष्टिः बद्धाञ्जलिः स्खलत्पदो विनम्रो मारजितो भगवतः समीपे ।

प्रार्थयमानश्च निःशब्दं ...'शरणागतोऽस्मि ।...अशरणशरण्य !...शरणागतोऽस्मि ।...पाहि...मां...लोकजित् ! पाहि माम् !...प्रक्षालय मम प्रखरान् एतान् स्वभावदोषान् !...भगवन्, प्रक्षालय । मोचय मामेतस्मात् पापसंमोहनजालात्, शाक्यमुने, मोचय । ...वितर परमां शान्तिं, मुनीन्द्र ! वितर चरमां क्षान्तिम्'—इति, जानुभ्यामवनिगतः,...तच्चरणकमलयोस्त्रिलोकीपावनयोर्मस्तकं न्यधात् ...अविरतवहदश्रुधाराक्लिन्नकपोलः ...प्रस्फुरदधरोष्ठः ।

CC-0 Pulwama Collection. Digitzed by eGangotri

अन्वभूच्च क्षणमात्रानन्तरं परममङ्गलं स्नपयन्तमिवामृतधाराभिः कमपि दृष्टिपातम्। अभयप्रदं कमपि करस्पर्शं मस्तके संतप्ते। अशृणोत् धीरगम्भीरं परमपावनं धम्म पदध्वनिम्... अस्पष्टं... भाविकालगह्वरान्नु समापतन्तम्—

'यो च पुब्बे पमज्जित्वा पच्छा सो नप्पमज्जति।'
'सो इमं लोकं पभासेति अब्भा मुत्तो व चन्दिमा॥'

..................

'यस्स पापं कतं कम्मं कुसलेन पिथीयति।'
'सो इमं लोकं पभासेति अब्भा मुत्तो व चन्दिमा॥'

..................

'अप्पमादरता होथ सचित्तमनुरक्खथ।'
'दुग्गा उद्धरथत्तान पंके सन्नो व कुञ्जरो॥'

..................

"अस्सो यथा भद्रो कसानिविट्टो
आतापिनो संवेगिनो भवाथ।
सद्धाय सीलेन वीरियेन च
समाधिना धम्मविनिच्छयेन च।
संपन्नविज्जाचरणा पतिस्सता
पहस्सथ दुःखमिदं अनप्पकम्।" इति।

उद्यद्दिनकरकरसंस्पृश्यमाना च निखिला सृष्टिः... मन्त्रमुग्धा... निरुद्धश्वासा।

CC-0 Pulwama Collection. Digitzed by eGangotri

